THE
HARIDAS SANSKRIT SERIES
142

# THE Tarka-Sangraha

Of

## M. M. S'RĪ ANNAMBHAṬṬA

With the KAMALĀ Commentary and NOTES
By

Nyāyāchārya Pandit S'rī Govind. S. Vaijāpurkar
*'Sadholal' Research Scholar, Government Sanskrit College, Benares.*

*Edited with*

The INDUMATI ( Hindi ) Commentary
by

Vyākarnāchārya Paṇdit S'rī Rāmchandra S'āstri

PUBLISHED BY
JAYA KRISHNA DĀS HARI DĀS GUPTA
*The Chowkhamba Sanskrit Series Office,*
Benares City.
1941.

श्री० १०८ आराध्यचरितेषु,

श्रीमन्माध्वसम्प्रदायाचार्य-

दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-

तर्करत्न-न्यायरत्न-

## श्री गोस्वामि दामोदरशास्त्रि-

चरणकमलेषु,

सादरं सविनयञ्च

क म लो प हा र

# गुरुगणानामाशिर्वचांसि ।

ग्रन्थोऽयं मया दृष्टः, मन्यते तावदयं सर्वेषामेव विद्यार्थिनां विशेषोपयोगी भवति, अतः गोविन्द-वैजापुरकराय एवमाशीर्वादः प्रदीयते येनायं दीर्घायुर्भूत्वा अन्यांश्च ग्रन्थानपि विरचयत्विति ।

**श्री० पं० वामाचरण-भट्टाचार्याणाम्**

न्यायाचार्यतर्कतीर्थमहोदयानाम्

का० राजस्थान सं० कॉलेजीयन्याय—

प्रधानाध्यापकानाम्

काशीवास्तव्येन महाराष्ट्राभिजनेन वैजापुरकरोपाख्येन श्रीगोविन्द-शर्मणा काशिकराजकीयसंस्कृतविद्याऽऽलये न्यायाचार्य्यपरीक्षायां प्रविष्टेन "तर्कसङ्ग्रह"स्य कमलाऽऽख्या टीका व्यधायि,

आपाततोऽस्माभिरवेक्षितेयं न्यायशास्त्रं प्रविविक्षून्न्तेवासिनो वाढमुपकर्त्रीति निर्विचिकित्सं सम्भावयन्, जगदीश्वरानुकम्पया टीककोऽयं बंहिष्ठामुन्नतिमासाद्य चिरं जीवतादित्याशिषैनमभि-नन्दयति ।

श्रीमन्माध्वसम्प्रदायाचार्य-

दार्शनिकसार्वभौम-साहित्यदर्शना-

द्याचार्य-न्यायरत्न-तर्करत्नानाम्

**गोस्वामि दामोदरशास्त्रिणाम्**

स्वान्तेवासिप्रकृष्टप्रखरमतिसता श्रीलगोविन्दनाम्ना
हिन्दीगीर्वाणवाणीद्वयविवृतिकृतं वोधदं वीक्ष्य तर्कम् ॥
सन्तुष्टस्वान्त आशीर्वचनशतमुखः प्रार्थये ज्ञानगम्य
यन्नम्रोऽयं प्रकुर्वन् पठनरतधियां शं शतं साधु जीव्यात् ॥ १ ॥

न्यायाचार्य—

**पं० शिवदत्तशास्त्रि-मिश्राणाम्**

काशीस्थराजकीय सं० पाठशालीयन्याय—

प्रधानाध्यापकानाम्

श्रीमतां निखिलदर्शनासाधारणधिषणानां काशीस्थराजकीय-

संस्कृतपाठशालीयभूतपूर्व-प्रधानाध्यक्षाणां पण्डितप्रवर-

## महामहोपाध्याय-श्रीगोपीनाथ

## कविराज एम् ए महोदयानां

# सम्मतिः

कमलाख्यसंस्कृतटीकया भाषाटीकया चोपेतं काशीस्थराजकीय-संस्कृतपाठशालीयपरीक्षाप्रश्नोत्तरसंग्रहयुतं तर्कसंग्रहस्याभिनव-संस्करणमिदमापाततो मया दृष्टम् । पुस्तकमिदं न्यायशास्त्रार्थ-मधिजिगमिषूणां कोमलधियां विद्यार्थिनामुपकाराय भूयसे भविष्य-तीति सम्भाव्यते ।

काशी
२३-८-४१

गोपीनाथ कविराजः

॥ श्रीगुरुश्शरणम् ॥

श्रीमतां न्यायाचार्य-काव्यतीर्थेत्यादिविरुदावलीभूषितानां

काशीस्थनित्यानन्दवेदविद्यालयाध्यक्षाणां तत्र भवतां

पण्डितप्रवर—श्रीढुण्ढिराजशास्त्रिचरणानां

# प्रशस्तिपत्रम्

नव्यन्यायछात्रेण वैजापुरकरोपाह्वेन गोविन्दशास्त्रिणाऽद्ययावद्-प्रकाशितया मूलग्रन्थाभिप्रायावगतावतीवसाहाय्यकमाचरन्त्या काशीस्थराजकीयसंस्कृतमहाविद्यालयीयसर्वविधमध्यमानिर्धारित-तर्कसंग्रहस्य हेत्वाभासीयोदाहरणान्तरसमेतया 'कमला'ख्यया संस्कृत-टीकया व्याकरणाचार्य पं० श्रीरामचन्द्र झा शास्त्रिकृतयेन्दुमत्या भाषाटीकया च संस्क्रियमाणं नव्यसंस्करणमस्य ग्रन्थस्य समालोक्य नूनमाह्लादातिशयोऽनुभूयतेऽस्माभिः । अन्ते चाङ्गलभाषीयासद्धेतु-स्वरूपविभागादिभिः सहास्य सम्पादनेन संस्कृतछात्रेषु विशेषतो नामग्रहणार्हस्यास्य गोविन्दशास्त्रिणः परिश्रमो नूनं महते छात्राणा-मुपकाराय भविष्यतीति मदीयो विश्वासः । आशासे चायं रुक्मिणी-रमणानुग्रहेण चिरायुर्भूयादिति ।

काशी
२-६-१९४१

ढुण्ढिराजशास्त्री
वाराणसेयनित्यानन्दवेदविद्यालयाध्यक्षः

॥ ॐ नमश्चिदात्मने ॥

# प्रास्ताविकं किञ्चित् ।

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तितः ॥ १ ॥**

अथेदं प्रकाश्यते सटिप्पणटीकाद्वयसमलङ्कृतं तर्कसङ्ग्रहनामकं ग्रन्थरत्नम् । अस्य खलु निर्माता महामहोपाध्याय-श्रीमदन्नम्भट्टो नाम विद्वान् नाविदितस्तर्कविचार-चतुराणाम् । महापुरुषोऽयं ई० १६०० षोडशशताब्दयाम् आन्ध्रदेशमलंचकारेति श्रूयते । ततः काशीमागत्याधीत्य च चिन्तामण्यादिनव्यन्यायन्यायवैशेषिकदर्शनादि-प्राचीनन्यायशास्त्रयो सारमुद्धृत्य तर्कसंग्रहाख्यं दीपिकाव्याख्यायुतं प्रकरणग्रन्थरत्न-मस्माकंनैयायिकानां कृते निर्माय समर्पितवान् , अन्येपि बहवो ग्रन्था अनेन विरचिता , परं स्वस्य धामात्रैव निहितमास्ते, यतः न कोऽपि संस्कृतसमाजे ईदृशो मिलिष्यति, येन पुस्तकस्यास्योद्घाटनं न कृतं स्यात्, यस्य कर्णपथे वा नायं संलग्न· स्यादिति । सर्वजनविश्रुतस्यास्य तर्कसंग्रहमाहात्म्यस्य पुनर्वर्णने पुनरुक्तिं भावयमानोऽयं जनस्तदुपेक्ष्य प्रथमतो न्यायशास्त्रस्योपादेयताविषये किञ्चिज्जल्पति ।

इह जगति दु.खं जिहासति सर्वोऽपि जन इति निश्चप्रचम् । तद्धि न स्रग्वस्त्रादिभिर्लौकिकैरुपायै· परिहर्तुं शक्यम्, तन्नाशे पुनर्दु खस्यानुभूयमानत्वे नात्यन्तिकदु खनिवृत्तिर्न सम्भवतीत्येतदन्यः कोऽप्युपायो दु.खात्यन्तनाशाय कल्प्य-इति मीमासाया समागतायामस्माभिः पूर्वजा एव शरणीकरणीया । तैर्ह्यस्य निर्णयः कृतः 'ज्ञानेनैवमुक्तिरि'ति । तथाच श्रुतिः—'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति ।

तद्धि तत्त्वज्ञानं प्रतिपादयति आत्मदर्शनं वा जनयति यच्छास्त्रं तदेव दर्शनशास्त्रमिति गीयते । तदपि आस्तिकदर्शनम्, नास्तिकदर्शनञ्चेति भेदेन द्वेधा । आस्तिकदर्शनमपि षड्विधम् , तेष्वन्यतमं न्यायदर्शनमत्र जागर्ति । इदमेव आन्वीक्षिकी विद्येति गीयते । तदर्थश्च, अनु = पश्चात् श्रवणोत्तरमितियावत्, ईक्षा = ज्ञानमर्थान्मननमन्वीक्षा, अन्वीक्षा प्रयोजनं यस्या. = विद्याया. सा आन्वीक्षिकी । तथाचेयं परिस्थिति.—

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य.' इति श्रूयते । अनया च मुमुक्षोरात्मदर्शनमिष्टसाधनं केन साध्यमित्यस्य विचार कृत. 'श्रवणेन

मननेन निदिध्यासनेन चे'ति । तत्र प्रथमं श्रवणम्=श्रुतिवाक्यजन्यशाब्दबोध आत्मविषयको विहितः, ततो मननम्, मननं हि तर्कपरिशुद्धया युक्त्या साधनम्, अनुमितिरितियावत् । अनात्मानं शरीरादिकमात्मत्वेन विभाव्य अनात्मगत-मिथ्याज्ञानेन दोषाणां कामक्रोधादीनामुत्पत्तिस्तेनप्रवृत्तिः ( वाग्बुद्धिशरीराणां पापपुण्यभेदेनारम्भः ), तेन जन्म, जन्मना च दुःखमिति आत्मन्यनात्मबुद्धिरेव दुःखजनिकेति तन्नाशाय मननस्यावश्यकत्वम्, दृढीभूतस्य मिथ्याज्ञानस्य मननं विना नाशासम्भवात् । मननाकारश्च–आत्मा शरीरादिभ्यो भिद्यते, आत्मत्वाद्यदितुरेभ्यो न भिद्यते न तदात्मत्ववद्यथा—जलम्, नचायं तथा, तस्मान्न तथेति ।

अत्र इतरपदार्थानां शरीरादीनामात्मत्वं कथ नेत्यादिज्ञानाय कोऽपि आश्रयणीयः स्यात्, न तावद्व्याकरणादिशास्त्रमत्रविषये समर्थम्, तत्र शब्दसाधुत्वादेरेवानुशासनादतोऽन्यच्छास्त्रमावश्यकमित्येतच्छास्त्रारम्भः । तत्र न्याय-वैशेषिकभेदेन न्यायशास्त्रं द्विविधमस्ति । तत्र न्यायमतानुसारेण मिथ्या-ज्ञाननाशाय तत्त्वज्ञानस्यावश्यकतेतित्युक्तमेव । इदानीं वैशेषिकमतेनैव विविच्यते—'द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्य-वैधर्म्यतत्वज्ञानान्निःश्रेयसाधिगमः' इति सूत्रम् । अत्र आत्मनो ज्ञानवत्त्वं साधर्म्यम्, शरीरस्य च तद्वैधर्म्यम्, शरीरस्यानित्यत्वं साधर्म्यम्, आत्मनश्च तद्वैधर्म्यमिति साधर्म्यवैधर्म्यैप्रतिपादिते, तज्ज्ञानेन च मननसिद्धिस्ततदनन्तरं निदिध्यासनम् दीर्घकालं नैरन्तर्यतज्ज्ञानसन्ततिरिति । तत आत्मदर्शम्, तत आत्यन्तिक-दुःखनिवृत्तिरूपमोक्षप्राप्तिः पुरुषस्येति पुमर्थवत्त्वेनास्य प्रयोजनवत्वं बोध्यम् । आन्वीक्षिकीमाहात्म्यविषये—

**तत्रोपनिषदं तात परिशेषं तु पार्थिव ।**
**मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥**

इति स्वयं भगवता वेदव्यासेनैवोक्तम् । मनुनापिः—

**आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥**

इति ( अध्या० १२ श्लो० १०६ ) तर्कशास्त्रस्य माहात्म्यं वर्णितम् ।

ये किल निरुपयोगित्वमस्य लोकस्थिताविति जल्पन्ति, तैर्नीतिशास्त्रविदः कामन्दकस्य श्लोकोऽयं दृष्टिपथं नेयः—

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥ इति ।

यैश्च तर्कशास्त्रं निरसमिति कव्यादिसहृदयायोग्येन नात्यन्तमावश्यकमित्युच्यते तान्प्रति प्रसन्नराघवकर्तुरुक्तिरेव पर्याप्ता स्यात्:—

येषां कोमलकाव्यकौशलकलालीलावती भारती ।
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ॥
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता—
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ इति ।

अलमप्रकृतविवेचनेन, प्रकृतमनुसरामः ।

तथाच प्रयोजनवदिदं न्यायशास्त्रमवश्यं ज्ञेयं प्रेक्षावद्भिरिति सिद्धम् । अयं तर्कसंग्रहोऽपि न्यायशास्त्रस्य प्रकरणग्रन्थ एवेत्यतो मूलभूतशास्त्रस्य यत्फलं मोक्ष अस्यापि तदेव प्रयोजनं बोध्यम् । सर्वजनविदितस्यास्य ग्रन्थरत्नस्य यद्यपि बव्ह्यष्टीकाः सन्ति न्यायबोधिन्यादयस्तथापि मूलग्रन्थसंल्लपने न कापि पूर्णतया सफलीभूतेति कृत्वा ममात्र कमलानिर्माणचेष्टा समभवत् । यद्यपि प्रांशुलभ्यफले वामनप्रयत्नवदुपहसनीयोऽयं मदीयो व्यापारस्तथापि परीक्षा दित्सूना मद्बान्धवाना छात्राणामेतत्ग्रन्थस्य मूलार्थतत्वज्ञानाय परमं दु.खं भवतीत्यनुभववता मया सहजसौहार्दवशीभूतेन कमलानिर्माणे साहसः कृतः ।

काशिकराजकीयसंस्कृतपाठशालीयपरीक्षाध्यक्षै. प्राच्यप्रतीच्यविद्यानिपुणैः **श्रीमन्मङ्गलदेव शास्त्रि** (M. A. D. PHIL [OXON], रॅजिष्टार गवर्नमेण्ट संस्कृत कॉलेज परीक्षा यू० पी० )भिरपि वर्षेऽस्मिन् निखिलमध्यमपरीक्षातृतीयखण्डे पाठ्यत्वेनाऽयं ग्रन्थ. स्थापित· । तत्र च प्रायो लोकव्यवहारभाजां अनुमानखण्डस्थहेत्वाभासीयविविधोदाहरणानामपि पाठ्यत्वेन निर्धारणं कृतमस्ति, येन छात्राः सम्यग्प्रबुद्धा. स्युरिति तान्युदाहरणान्यप्यत्र सन्निवेशितानि, विवेचितानि च । अन्ते ( ख ) परिशिष्टे पाश्चात्यन्यायमतानुसारिहेत्वाभासविचारः, न्यायशास्त्रीयपदार्थाना मानचित्राणि, काशीस्थराजकीयसस्कृतपाठशालीयपरीक्षाप्रश्नोत्तरसंग्रहः, विषमस्थलटिप्पण्य., बृहद्विषयानुक्रमणिका चात्र मया सन्निवेशिता । सौवर्णसरोजे गन्धनिर्माणाय श्रीमद्भि. पण्डितप्रवरेण्यैः मत्सुहृद्वर्यैः श्रीव्याकरणा-

चार्यरामचन्द्रझा-शास्त्रिभिः 'इन्दुमती' नामिका भाषाटीकाप्यत्र सन्निवेशिता, इदमवश्यं वक्तव्यं भवेद्यदद्यावधि तर्कसंग्रहस्य ईदृशी हिन्दीटीका कुत्रापि न संजाता। सोऽयं सर्वांगपरिपूर्णस्तर्कसङ्ग्रहस्तत्र भवतां पुर उपस्थापितः। अत्र ये किल मदीय-बुद्धिमान्द्यजाः सीसकाक्षरयोजकजाश्चाशुद्धयस्ता गुणैकपक्षपातिभिर्विद्वद्भिरवश्यं क्षन्तव्या इति भूयो भूयः प्रार्थये ।

अस्मिन्मदीये सम्पादने यैर्यैर्बहुभिस्सहायैरहमुपकृतस्तेषा नामस्मरणमेव उपकारप्रत्युपकृत्यै करोमि, नामस्मरणादन्यत्किम्मदधीनमिति सुधियो विचारयन्तु। स्वर्गस्थान् **श्रीमद्गुरुवर्य पं० गोपाल भट्ट भट्ट न्यायाचार्यपादान्, एवं श्रीमद्गुरुवर्य पूज्यपाद श्री पं० शिवदत्तमिश्र न्यायाचार्य** ( प्रो० गवर्नमेण्ट संस्कृत कॉलेज बनारस ) चरणान् यैरहमीदृशं कर्म कर्तुं योग्यीकृतस्तान् साञ्जलि प्रणमामि ।

तर्कसंग्रहकार्ये सर्वतस्सहायमाचरद्भिः मदुपरि निरुपधिकृपावद्भिः श्री पं० धुण्ढिराजशास्त्रि टोपले न्यायाचार्यमहोदयैः यथाहमत्रयोजितस्तथा योजको विरल एव स्यादिति तानपि प्रणमामि । सर्वारम्भमूलं जीवनं ये मां ददति, सर्वतस्स्वीयबालकवत्पालयन्ति, येषामुत्साहेनैवेदं कार्यं कर्तुं शक्तश्चाहं तेषां काशिकराजकीय-पाठशाला—**प्रधानाध्यक्षाणाम**शेषानुपकारान् सप्रश्रयं गिरसाऽऽवहामि, मदुपरि सर्वदा ईदृशीमेव दयां विधातुञ्च तान् प्रार्थयामि ।

अन्यांश्च मद्सुहृद्वरान् श्री पं० केशवदेवशास्त्रिणः न्यायाचार्यान् पाश्चात्य-न्यायशास्त्रविचारे सहायकान् श्रीजितेन्द्र शास्त्रि जेटली महोदयान्, मत्सुहृद्वरान् नैयायिक पं० गणेशशास्त्रिपाटणकरांश्च शतशो धन्यवादाः समर्प्यन्ते ।

अन्ते यैरयं ग्रन्थः प्रकाशपदवीं नीतस्तान् श्रेष्ठिवर-गोलोकवासि-हरिदासगुप्तात्मज-श्रीजयकृष्णदासगुप्तमहोदयाननेकान् धन्यवादान् वितीर्य—

सर्वशङ्करं शङ्करं प्रणमन् विरमामि लेखादस्मादिति शम् ।

जन्माष्टम्यां—
सरस्वती-भवनम्, गवर्नमेण्ट
संस्कृत कॉलेज
काशी सं० १९९८

विदुषामाश्रवः—
**गोविन्दवैजापुरकरः—**

## सटिप्पण-सटीक-तर्कसंग्रहस्य बृहद्-

# विषयानुक्रमणिका ।

इति प्रत्यक्षपरिच्छेदः।

अनुमानखण्डेः—

## परिशिष्टम् ।

॥ श्रीः ॥

# तर्कसंग्रहः

## सटिप्पणकमला-इन्दुमतीव्याख्याद्वयोपेतः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥ १ ॥

वैजापूरकरः सुतो नरहरेः श्रीमन्नृसिंहं हृदा
स्मृत्वाऽऽनस्य च भट्टभट्टकुलजं गोपालसंज्ञं गुरुम् ।
प्राज्ञः कश्चन तर्कसंग्रह इमां बालोपकारक्षमां
व्याख्यां ध्वस्तमलां तनोति कमलां गोविन्दनामा कृती ॥१॥
जननीजनकौ नत्वा गुरूंश्चापि पुनः पुनः ।
रचिता 'कमला' ख्येयं व्याख्या विख्यातिमश्नुतु ॥ २ ॥

**अन्वयः**—हृदि विश्वेशम् निधाय च गुरुवन्दनम् विधाय, बालानाम् सुखबोधाय मया तर्कसङ्ग्रहः क्रियते ॥ १ ॥

**अर्थः**—हृदि=अन्त करणे, विश्वेशम् विश्वस्य=जगत ईश.=अधिपतिस्तं जगन्नियन्तारं शिव निधाय=नितरा स्थापयित्वा ध्यात्वेत्यर्थ., च=पुन गुरुवन्दनम् गुरो =विद्यागुरो. वन्दनं=नमस्कारं, विधाय=कृत्वा, बालानाम्=अधीतव्याकरणकाव्यकोशाऽनधीतन्यायशास्त्राणाम्, सुखबोधाय सुखेन=अनायासेन बोधो=ज्ञानं तस्मै, मया=अन्नम्भट्टेन, तर्कसङ्ग्रह तर्क्यन्ते=प्रमितिविषयीक्रियन्ते इति तर्का:=द्रव्यादिसप्तपदार्थास्तेषा सङ्ग्रह =संक्षेपेण स्वरूपकथनं यत्र ग्रन्थे एवम्भूत. तर्कसङ्ग्रहनामा ग्रन्थ , क्रियते=विधीयते ॥ १ ॥

नन्वत्र ग्रन्थारम्भे सर्वत्र किमर्थं मङ्गलं क्रियत इति चेत् । श्रुणु । प्रकृतग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमेव तदनुष्ठानात्, तत्रापि ग्रन्थादौ मङ्गलकरणेन शिष्या अपि एवं कुर्युरिति शिष्यशिक्षाऽपि जायते ।

वयन्तु — मङ्गलस्य ग्रन्थघटकीकरणेन तत्पाठकाना श्रोतृणाञ्च सर्वेषां निर्विघ्नसमाप्तिर्भविष्यतीति कृत्वैव तन्निबन्धनादितिब्रूमः ।

इन्दुमती ।

रामचन्द्रं नमस्कृत्य रामचन्द्रेण धीमता ।
मनसीन्दुसतीं ध्यात्वा रचितेन्दुमती मुदा ॥

हृदयमें जगत्-कर्त्ता श्रीजगदीश्वरको धारणकर तथा श्रीगुरु-चरणकी वन्दना करके न्यायशास्त्रमें अनभिज्ञ बालकोंको अनायास न्यायवैशेषिक शास्त्रके पदार्थोंका ज्ञान होनेके लिये हम (अन्नम्भट्ट) इस तर्कसंग्रह नामक पुस्तककी रचना करते हैं॥१॥

## (१) उद्दुदेशप्रकरणम् ।

पदार्थाः कति कानि च तेषां नामानि ?

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।**

**द्रव्येति** । एते सप्तपदार्था इत्यन्वयः । अत्र पदार्थपदेन पदस्य अर्थः=अभिधेयः पदार्थ इति व्युत्पत्त्या अभिधेयत्वं पदार्थस्य लक्षणं लभ्यते, अभिधा च ईश्वरेच्छा तद्विषयत्वञ्च सकलपदार्थेष्वस्तीति लक्षणसमन्वय. ।

**अत्रेदमवधेयम्**—धर्मो हि द्विविधो भवति जातिरूपो उपाधिरूपश्चेति भेदात् । सर्वेषु पदार्थेषु वर्तमान. 'त्वं' इति धर्मः, यथा द्रव्यत्वं द्रव्ये—गुणत्वं गुणे—कर्मत्वं कर्मणीत्यादि । तथा चाद्येषु द्रव्यगुणकर्मसु प्रत्येकं वर्तमानो धर्मः जातिरिति गीयते, सामान्यविशेषसमवायाऽभावेषु च वृत्तिमन्तो धर्माः उपाधिरिति गीयन्ते, न्यायमते समवायो नाम सम्बन्धविशेषः, द्रव्यत्वगुणत्वकर्मत्वरूपजातयः समवायसम्बन्धेनैव द्रव्यगुणकर्मसु वर्तन्ते, सामान्यत्वविशेषत्वसमवायत्व—अभावत्वरूपोपाधयश्च स्वरूपनामकसम्बन्धेनैव वर्तन्त इति ।

पदार्थ सात हैं—द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय और अभाव ।

द्रव्याणि कति, कानि च तानि ?—

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।**

प्रथमोपस्थितत्वादादौ द्रव्याणि विभजते—**तत्रेति** । तत्र=सप्तपदार्थेषु मध्ये, द्रव्याणि=द्रव्यत्वजातिविशिष्टानीत्यर्थ. ।

कानि तानीत्याशङ्कायामाह—**पृथिवीति** । एतानि नवैव द्रव्याणीत्यर्थः । अत्रायं क्रम —प्रथमसुद्देश.=नाम्ना वस्तुसंकीर्तनरूप., ततस्तस्य ( उद्दिष्टस्य ) लक्षणम्, ततो लक्षितस्य विभाग इति, तथाचात्र उद्दिष्टस्य द्रव्यादेर्लक्षणमकृत्वैव

विभागकरणमसङ्गतमिति तु न शंक्यम् , पूर्वं द्रव्याणीत्यनेनैव लक्षणस्य वोधनात् । एवञ्च द्रव्यत्वजातिमत्त्वं द्रव्यस्य लक्षणं बोध्यम् । अत्रापि पृथिवीत्व, जलत्व, तेजस्त्व, वायुत्व, आत्मत्व, मनस्त्वेति जातयः, अन्याश्चोपाधय इति ध्येयम् ।

इन द्रव्यादि सातों पदार्थोंमें—पृथिवी, जल, तेज, वायु, आकाश, काल, दिशा, आत्मा और मन ये नव ही द्रव्य हैं।॥

कति गुणाः के च ते ?—

**रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः ।**

गुणान् विभजते—रूपेति । गुणत्वजातिमत्त्वं गुणस्य लक्षणम्, अत्र तु रूपत्व-रसत्वादयः सर्वा अपि जातयः । एते चतुर्विंशतिगुणाश्च यथायथं समवायसम्बन्धेन नवसु द्रव्येष्वेव वर्तन्ते, न तु गुणेषु । तत्र कुत्र के गुणा इत्याशङ्कायामुच्यते—

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाऽम्बरे महेश्वरेऽष्टौ मनसस्तथैव च । इति,

तथाहि—वायौ नव गुणाः—स्पर्श—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—परत्व—अपरत्व—संस्काराः । तेजसि एकादश गुणाः—रूप—स्पर्श—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—परत्व—अपरत्व—द्रवत्व—सस्काराः । जले चतुर्दश गुणाः—रूप—रस—स्पर्श—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग-परत्व अपरत्व-गुरुत्व—द्रवत्व—स्नेह—संस्काराः । पृथिव्यामपि चतुर्दश गुणाः—रूप—रस-गन्ध-स्पर्श-संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—परत्व—अपरत्व गुरुत्व—द्रवत्व—संस्काराः । जीवात्मनि चतुर्दश गुणाः—संख्या—परिमाण—पृथक्त्व—सयोग—विभाग—बुद्धि—सुख—दुःख—इच्छा—द्वेष—प्रयत्न—धर्म—अधर्म—संस्काराः । दिशि पञ्च गुणाः—संख्या—परिमाण—पृथक्त्व—संयोग—विभागाः । कालेऽपि पञ्च गुणाः—सख्यादयः । आकाशे षड् गुणाः—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—शब्दाः । ईश्वरे अष्टौ गुणाः—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—ज्ञान—इच्छा—कृतयः । मनसि अष्टौ गुणाः—संख्या—परिमाण—पृथक्त्व—संयोग—विभाग—परत्व—अपरत्व—संस्कारा इति संक्षेपः ।

गुण चौबीस प्रकारके होते हैं–रूप, रस, गन्ध, स्पर्श, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, गुरुत्व, द्रवत्व, स्नेह, शब्द, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म और संस्कार ।

क्रियन्ति कर्माणि कानि च तानि।?—

## उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ।

कर्माणि विभजते—**उत्क्षेपणमिति** । कर्मत्वजातिमत्त्वं कर्मणो लक्षणम् । अत्रापि उत्क्षेपणत्व–अपक्षेपणत्व–आकुञ्चनत्व–प्रसारणत्वादयो जातयः, उत्क्षेपणादीना लक्षणन्तु मूलकृतंवाऽग्रे वक्ष्यते । द्रव्ये द्रव्यत्वजातेः, गुणे गुणत्वस्य, कर्मणि च कर्मत्वजातेश्च वर्तमानत्वात्त्रिपु लक्षणसमन्वयो बोध्यः । एवं द्रव्यगुणकर्मसु वर्तमानाऽन्याऽप्येका सत्ताख्या जातिर्नैयायिकैः स्वीक्रियते, तथाच गुणकर्मभिन्नत्वे सति सत्तावत्त्वं द्रव्यस्य, द्रव्यकर्मभिन्नत्वे सति सत्तावत्त्वं गुणस्य, द्रव्यगुणभिन्नत्वे सति सत्तावत्त्वं कर्मणश्च लक्षणान्तरं सम्भवतीति बोध्यम् ।

कर्म पांच प्रकारके होते हैं—उत्क्षेपण (ऊपरकी तरफ फेंकना), अपक्षेपण (नीचे की ओर फेंकना ), आकुञ्चन (एकत्र करना), प्रसारण (फैलाना) और गमन (चलना) ।

सामान्यं कतिविधम् ?—.

## परमपरं चेति द्विविधं सामान्यम् ।

सामान्यं=जातिः, "जातिर्जातं च सामान्यमि"ति कोशात् । **अत्रेदमवधेयम्**–नैयायिकैर्हि अनेकेषु एकत्वव्यवहारार्थं जात्याख्यं पदार्थान्तरं स्वीक्रियते, सा एका नित्या च, सा हि जातिः सर्वत्र समवायसम्बन्धेन वर्तत इति । सामान्यलक्षणन्तु–नित्यत्वे सति अनेकसमवेतत्वम्, यथा द्रव्यत्वे नित्यत्वमस्ति, अथचाऽनेकेषु नवसु द्रव्येपु समवायसम्बन्धेन द्रव्यत्वं वर्तत इति लक्षणसमन्वयः । सामान्यस्य भेदानाह–**परमिति** । परसामान्यम्–अपरसामान्यमिति भेदेन सामान्यं द्विविधमित्यर्थः । परत्वम्=अधिकदेशवृत्तित्वम्, अपरत्वम्=अल्पदेशवृत्तित्वम्, सत्ता जातिः परा, द्रव्यत्वादिसपरामिति ।

सामान्य दो तरहके हैं—परसामान्य और अपरसामान्य । अधिक देशमें जो रहता है वह पर–सामान्य कहाता है । जैसे–द्रव्यत्वकी अपेक्षासे सत्ता । थोड़े देशमें जो रहता हैं वह अपर–सामान्य कहता है । जैसे–सत्ताकी अपेक्षासे द्रव्यत्व ।

कियन्तो विशेपाः ?—

## नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

स्वतोव्यावर्तकत्वं विशेषस्य लक्षणम्। विशेषस्य भेदानाह—**अनन्तेति**। अनन्ता एव विशेषा इत्यन्वय। नित्यद्रव्यवृत्तय इति पदं विशेषा नित्यद्रव्येष्वेव वर्तन्ते इति द्योतनाय।

विशेष केवल नित्यद्रव्योंमें रहता है और वह अनन्त है। (पृथिवी, जल, तेज और वायु के परमाणु तथा आकाश, काल, दिशा, आत्मा और मन ये सब नित्य द्रव्य हैं)।

समवायः कतिविधः ?—

**समवायस्त्वेक एव।**

नित्यत्वे सति सम्बन्धिभिन्नत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्। समवायाख्य. सम्बन्ध तत्र सम्बन्धत्वम्-स च नित्य इति नित्यत्वम्-तस्य पदार्थान्तरत्वात्सम्बन्धिभूतद्रव्यगुणकर्मतः भिन्नत्वमप्यस्तीति लक्षणसमन्वय। समवायं विभजते—**समवायस्त्वेक एवेति**। एवकारेण एकाधिकसंख्याव्यवच्छेद., समवायसम्बन्धश्च केषा केषां भवतीति मूलकृतैव वक्ष्यते।

समवाय (नित्यसम्बन्ध) एकही है।

अभावः कतिविधः ?—

**अभावश्चतुर्विधः—प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति।**

**इत्युद्देशग्रन्थः।**

अभावत्वरूपाऽखण्डोपाधिमत्त्वं अभावस्य लक्षणम्। अभावं विभजते-**अभावश्चतुर्विध इति**। के ते भेदा इत्याह-**प्रागभाव इति**। प्रागभाव –प्रध्वंसाभावः–अत्यन्ताभाव.–अन्योन्याभाव इति भेदेनाभावश्चतुर्विध इत्यर्थ। इति=एतावत्पर्यन्तम्, उद्देशस्य=नाममात्रेण वस्तुसंकीर्तनरूपस्य ग्रन्थ इति।

अभाव चार प्रकारके हैं–प्रागभाव, प्रध्वंसाभाव, अत्यन्ताभाव और अन्योन्याभाव।

## (२) द्रव्यलक्षणप्रकरणम्।

पृथिव्याः किं लक्षणं, कति च भेदा. ?—

**तत्र गन्धवती पृथिवी। सा द्विविधा–नित्याऽनित्या च। नित्या-परमाणुरूपा। अनित्या–कार्यरूपा। पुनस्त्रिविधा–शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः।**

## अथ द्रव्यलक्षणनिरूपणम् ।

तत्र = प्रथमोद्दिष्टनवविधद्रव्येषु, पृथिवी गन्धवतीत्यर्थः । समवायेन गन्धवत्त्वं पृथिव्या लक्षणम् , गन्धो हि गुणपदार्थः, स च समवायसम्बन्धेन पृथिवीरूपद्रव्ये वर्तत इति लक्षणसमन्वयः । पृथिवीं विभजते—**सा द्विविधेति** । नित्या पृथिवी-अनित्या पृथिवी इति भेदेन द्विविधा पृथिवी अस्तीति भावः । का सा नित्या इत्याकांक्षायामाह–**नित्या परमाणुरूपेति** । नित्यत्वं नाम–प्रध्वंसाभावभिन्नत्वे सति नाशरहितत्वम् , परमाणुश्च—

'जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते ।'

इति रूपः, तथाच परमाणोर्नाशो न भवतीति नाशरहितत्वमस्ति प्रध्वंसाभावभिन्नत्वमप्यस्तीति लक्षणसमन्वयः । **अनित्येति** । अनित्यत्वं नाम–उत्पत्तिमत्त्वे सति विनाशित्वम् । कार्यरूपा=द्व्यणुकादिरूपा, द्वाभ्यां परमाणुभ्यां द्व्यणुकाख्यं द्रव्यं जायते, त्रिभिर्द्व्यणुकैस्त्रसरेणुरित्यादि, एवञ्च द्व्यणुकं हि परमाणुद्वयसंयोगेनोत्पद्यते नश्यति चेति तत्रानित्यत्वलक्षणसमन्वयः, एवमन्यत्राप्यूह्यम् । पुनः = कार्यरूपा पृथिवीत्यर्थः । **शरीरेति** । चेष्टावत्त्वं शरीरस्य लक्षणम् , चेष्टा नाम = हिताहितप्राप्तिपरिहारानुकूला क्रिया । अस्मदादीनाम्=मनुष्यादीनां शरीरं पार्थिवशरीरमित्यर्थः । इन्द्रिम् = पार्थिवेन्द्रियम् , गन्धग्राहकम् = लक्षणमिदम् , घ्राणम्= इति तस्य नाम, तत्कुत्र निवसतीत्याह—**नासाग्रवर्तीति** । ग्राहकमित्यस्य = ग्रहजनकमर्थः, ग्रहपदेन च प्रत्यक्षात्मकं ज्ञानं विवक्षितम् , तथाच गन्धविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं घ्राणेन्द्रियस्य लक्षणम् , गन्धस्य प्रत्यक्षं 'इदं सुरभि, इदमसुरभि, इति ज्ञानम् घ्राणेन्द्रियेणैव भवतीति लक्षणसमन्वयः । **विषयेति** । शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनं विषयः । के पार्थिवविषया इत्याह–**मृत्पाषाणादिरिति** ।

**इदमत्रावधेयम्**—अथावावधि लक्षणं लक्षणमित्युच्यते तत्किं स्वरूपमिति चेत् । शृणु । लक्षणम्=चिन्हं=ज्ञापकम् , असाधारणो धर्म इति यावत् , तादृशाऽसाधारणधर्मेण वस्तुनो ज्ञानं भवति, यथा–लोमवल्लाङ्गूलवत्त्वधर्मेण पशुर्ज्ञायते । असाधारणत्वञ्च–अव्याप्ति—अतिव्याप्ति—असम्भव–एतद्दूषणत्रयरहितधर्मत्वम् । अव्याप्तिर्नाम–लक्ष्यैकदेशावृत्तित्वम् , यथा–गोर्नीलरूपवत्त्वे लक्षणे कृते तदेकदेशश्वेतगवि नीलरूपस्याऽवर्तमानत्वात् लक्षणमिदमव्याप्तिदोषग्रस्तम् । अतिव्याप्तिर्नाम–

लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम्, यथा-गो शृङ्गित्वमिति, तद्धि लक्ष्यभूते गवि वर्तमानं सदलक्ष्ये महिषादावपि शृङ्गित्वमस्तीति तस्याऽतिव्याप्तिदोपग्रस्तत्त्वम्। असम्भवो नाम-लक्ष्यमात्रावृत्तित्वम्, यथा-गोरेकशफवत्त्वम्, एकशफवत्त्वमश्वादौ वियते न तु गवीति लक्ष्यमात्रेऽवृत्तित्वात्तस्याऽसम्भवदोषग्रस्तत्वम्। अथ किं तत् गोर्लक्षणं यदेतद्दोषत्रयशून्यं स्यादिति चेत्-सास्नादिसत्त्व तदित्यवधारय। सास्ना नाम गवा गलकम्बल इति दिक्।

पृथिवी आदि नव द्रव्योंमें गन्धवाले द्रव्यका नाम'पृथिवी' है (पृथिवीमें समवाय सम्बन्धसे गन्ध रहताहै)। वह पृथिवी दो तरहकी है-नित्य और अनित्य। नित्य पृथिवी वह है-जो परमाणुरूपहै। और अनित्य पृथिवी वह है जो घट-पटआदि कार्यरूप है। पुनः वह कार्यरूप अनित्यपृथिवी भी तीन प्रकारकी है-शरीर, इन्द्रिय और विषय इस भेदसे। उदाहरण,जैसे-हमलोगोंका शरीर,पार्थिवशरीर है। गन्धको ग्रहण करनेवाला घ्राणेन्द्रिय-पार्थिव इन्द्रिय है, जो नासिकाके अग्रभाग (चोटी) पर विराजमान है। मृत्तिका, पत्थर, घट-पट आदि सभी पदार्थ पार्थिव-विषय है।

जलस्य किं लक्षणं कति च भेदाः ?—

**शीतस्पर्शवत्य आपः। ता द्विविधाः-नित्या अनित्याश्च। नित्याः-परमाणुरूपाः। अनित्याः-कार्यरूपाः। पुनस्त्रिविधाः-शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।**

**शीतस्पर्शेति**। 'आप.' इति पदेन पाणिनिनिर्दिष्टस्य अप्शब्दस्य प्रथमाबहुवचनं न ग्राह्यम्, किन्तु आप =जलमित्यर्थ। समवायेन शीतस्पर्शवत्त्वम्-अपा लक्षणम्, 'शीतं जलम्' इति प्रत्ययो जायते, तथाच समवायेन शीतस्पर्शरूपगुणस्य जलद्रव्ये सत्वाल्लक्षणसमन्वय.। समवायेनेति पदानुपादाने कालरूपद्रव्येऽतिव्याप्तिः, कालो हि जगदाधारस्तत्र कालिकाख्यसम्बन्धविशेषेण सर्वमपि अनित्यं वस्तु वर्तत इति शीतस्पर्शस्याऽपि कालिकेन तत्र सत्वादतिव्याप्तिरतस्तद्वारणाय समवायेनेत्युपादानम्, तथाच समवायसम्बन्धेन शीतस्पर्शस्य जलएव सत्वान्नातिव्याप्तिरिति। एवमेव पृथिव्यादिसर्वलक्षणेपु समवायेनेति पदस्य व्यावृत्तिर्बोध्या। जलं विभजते—**ता द्विविधा इति**। नित्यत्वादिक पूर्ववत्। कार्यरूपाः=द्व्यणुकादिरूपाः सर्वा आपः अनित्या इत्यर्थः। **पुनरिति**। विभक्ता अनित्या आपः पुनस्त्रिविधा

इत्यर्थः । शरीरम्=जलीयं शरीरम्, तद्वरुणलोके वर्तत इत्यर्थः । इन्द्रियम्=रसनेन्द्रियम् । **रसग्राहकमिति** । रसविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं रसनेन्द्रियस्य लक्षणम् । अत्र इन्द्रियत्वमात्रस्य लक्षणत्वे घ्राणेन्द्रियादावतिव्याप्तिस्तत्रापीन्द्रियत्वसत्त्वादतः सत्यन्तम् । इन्द्रियपदानुपादाने रसनेन्द्रियरससन्निकर्षेऽतिव्याप्तिस्तस्यापि रसग्राहकत्वात् (एतत्तत्वं प्रत्यक्षखण्डान्ते व्यक्तीभविष्यति) अत उभयोरुपादानम् । रसनेन्द्रियं कुत्र निवसतीत्याह—**जिह्वाग्रवर्तीति** । विषयमाह—**सरिदिति** । आदिना=करकादिपरिग्रहः ।

जल वही कहलाता है जिसका स्पर्श शीतल (ठण्डा) हो । वह जल दो प्रकारका है–नित्य और अनित्य । परमाणुरूप जल नित्य है और कार्यरूप जल अनित्य है । पुनः वह कार्यरूप जल शरीर, इन्द्रिय और विषयके भेदसे तीन प्रकारका है । वरुणलोकमें निवास करनेवालेका शरीर जल का है । जीभके अग्रभाग ( चोटी ) पर रहकर मधुर आदि रसको ग्रहण करनेवाली इन्द्रिय 'रसना' है और वही जलीय इन्द्रिय है । नदी, तलाव, समुद्र, कूप आदि जलीय विषय हैं ।

तेजसः किं लक्षणं कति च भेदाः ?—

**उष्णस्पर्शवत्तेजः । तच्च द्विविधम्–नित्यमनित्यं च । नित्यं–परमाणुरूपम् । अनित्यं–कार्यरूपम् । पुनस्त्रिविधं-शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो--भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अबिन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ।**

**उष्णस्पर्शेति** । समवायेन उष्णस्पर्शवत्त्वं तेजसो लक्षणम् । तद्विभजते—**तच्चेति** । नित्यत्वादिलक्षणं पूर्ववत् बोध्यम् । पुनः=कार्यरूपमनित्यं तेजस्त्रिविध मित्यर्थः । शरीरम्=तैजसशरीरमादित्यलोकवासिनामित्यर्थः । **इन्द्रियमिति** । रूपविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं चक्षुरिन्द्रियस्य लक्षणम् । तैजसविषयं विभजते—**विषयेति** । भुक्तस्य=अन्नादेः पीतस्य जलादेश्च, परिणामो=जीर्णता तस्य हेतुरुदर्यमित्यर्थः । आकरजम् आकरात्=खनितः जातमित्यर्थः । (१)**सुवर्णादिरिति** ।

---

( १ ) सुवर्णस्य तैजसत्वन्तु सुवर्णन्तैजसमसति प्रतिवन्धकेऽत्यन्ताग्नि-

आदिपदेन रजतादिधातूना परिग्रहः ।

तेज वही कहलाता है-जिसमें उष्ण ( गरम ) स्पर्श हो । तेज भी दो तरहका होता है-नित्य और अनित्य । परमाणुरूप तेज नित्य है और कार्य ( वह्नि आदि ) रूप तेज अनित्य है । पुनः कार्यरूप अनित्य तेज शरीर, इन्द्रिय और विषयके भेदसे तीन प्रकारका है । तैजस-शरीर आदित्य ( सूर्य ) लोकमें है । रूपका प्रत्यक्ष ( ज्ञान ) करानेवाली चक्षु-इन्द्रिय जो कि नेत्रके अन्दर काली पुतली (कृष्ण तारा)के अग्रभाग में रहती है वही तैजस-इन्द्रिय है । तैजस-विषय चार प्रकारके हैं-भौम, दिव्य, उदर्य और आकरज । अग्नी आदि भौम तेज है, क्योंकि वह भूमी से उत्पन्न होता है । जल से प्रादुर्भूत होने वाली बिजली दिव्य तेज है । खाई हुई चीजोंको पचानेवाली पेटकी अग्नि उदर्य-तेज है । खानोंसे उत्पन्न सुवर्ण, रजत आदि आकरज तेज है ।

वायोः किं लक्षणं कति च भेदाः ?—

**रूपरहितस्पर्शवान्वायुः । स द्विविधः—नित्योऽनित्यश्च । नित्यः परमाणुरूपः । आनित्यः—कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसञ्ज्ञां लभते ।**

वायोर्लक्षणमाह—**रूपरहितेति** । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । रूपाख्यो गुणः पृथिवीजलतेजःस्वेव वर्तते, स्पर्शगुणश्च पृथिव्यादिचतुष्टयवृत्तिः, एवञ्च वायौ रूपरहितत्वं वर्तते, अथच स्पर्श ( अनुष्णाशीताख्य ) वत्त्वमपीति लक्षणसमन्वयः । अत्र स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिरतो रूपरहितत्वे सतीति । तन्मात्रोपादाने आकाशादावतिव्याप्तिस्तत्र रूपाभावादतस्स्पर्शवत्त्वपदं देयम् । वायु विभजते—**स द्विविध इति** । **इन्द्रियमिति** । स्पर्शग्राहकम्=लक्षणमिदम्, त्वक्—इति तस्य नाम, सर्वशरीरवर्तीति तत्स्थानम्, एवञ्च स्पर्शविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं त्वगिन्द्रियस्य लक्षणम् । ननु प्राणस्य कुत्राऽन्तर्भाव इत्यत आह—**शरीरान्त इति** । तथाच प्राणस्य विषयेऽन्तर्भावः । ननु "प्राणोऽपानः समानश्चोदानव्यानौ च" इति कोशात् प्राणस्य पञ्चविधत्वं दृश्यते

---

संयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्ववत्वाद्यन्नैवं तन्नैवमिति व्यतिरेक्यनुमानेन वोध्यम् । "अग्नेरपत्यं प्रथमं हिरण्यमि"ति वचनात्सुवर्णस्य तैजसत्वमिति तु सुन्दरः पन्थाः ।

तत्कथं प्राण इति एकवचनेन प्राणस्यैकत्वमुक्तमित्यत आह—स चेति । प्राणो हि एक एव, पञ्चत्वव्यवहारस्तु हृदयादिस्थानवृत्तित्वादौपाधिक एवेति ध्येयम्(१) ।

वायु वही कहलाता है—जो रूप रहित हो और स्पर्शवान् हो। वह वायु दो तरहका है-नित्य और अनित्य। नित्यवायु परमाणुस्वरूप है और अनित्य-वायु कार्यस्वरूप है। पुनः कार्यरूप अनित्य वायु भी तीन प्रकारका है-शरीर, इन्द्रिय और विषय इस भेदसे। वायवीय-शरीर वायुलोकमें है। वायवीय-इन्द्रिय-त्वगिन्द्रिय है, जो समस्त शरीरमें वर्तमान है और जिससे उष्ण, शीतल आदि स्पर्शका प्रत्यक्ष होता है। वृक्ष आदि को हिलाने वाला वायु विषय है। शरीरके अन्दर संचार करानेवाला वायु प्राण है और वह एक ही है, किन्तु हृदय उदर आदि स्थानोंके भेदसे पांच प्रकारका कहलाता है,जैसे-प्राण वायु, अपान-वायु, समान-वायु, उदान-वायु और व्यान-वायु।

आकाशस्य किं लक्षणं कतिविधं च तत्?—

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यञ्च ॥**

आकाशस्य लक्षणमाह—**शब्दगुणकमिति** । समवायेन शब्दाश्रयत्वं आकाशस्य लक्षणम् । शब्दरूपगुणस्य समवायसम्बन्धेनाकाशे एव सत्त्वाल्लक्षणसमन्वयः । ननु पृथिवीजलादिवत् किमाकाशमपि नानाविधमस्तीत्याशङ्कायामाह—**तच्चेति** । तच्च=आकाशं च एकमेवेत्यर्थः, अनेकत्वे प्रमाणाभावात् । **विभ्विति** । विभुत्वम्= सर्वमूर्तद्रव्यसंयोगित्वम् , मूर्तत्वं नाम—क्रियावत्त्वम् , येषु द्रव्येषु समवायेन क्रिया=कर्माख्यः पदार्थो वर्तते तानि मूर्तद्रव्याणि पृथिवी-जल-तेज-वायु-मनांसि, तैः सह ये संयोगिनः=संयोगाख्यसम्बन्धयुक्तास्ते विभवः आकाश-काल-दिग्-आत्मनामकानि (२)द्रव्याणि, एवञ्चाकाशस्य सर्वमूर्तद्रव्येषु संयुक्तत्वाद्विभुत्वं सिद्ध्यति । विभुद्रव्यं हि नित्यं भवतीति नियमादाकाशस्यापि नित्यत्वमाह—**नित्यं चेति** । आकाशस्य प्रत्यक्षं न भवति(३)।

---

(१)वायुर्हि—प्रत्यक्षप्रमाणेन न ज्ञायते किन्तु अनुमानेन । अनुमानाकारश्च-अपाकजानुष्णाशीतःस्पर्शः क्वचिदाश्रितः स्पर्शत्वात्पृथिवीस्पर्शवदित्यनुमानेन क्वचिदाश्रितत्वं सिद्ध्यति, क्वचित्पदार्थो वायुरेवेति संक्षेपः ।

(२) मूर्तद्रव्यप्रसंगात् पृथिवी-जल-तेज-वायु-आकाशानि भूतानि बोध्यानि ।

( ३ ) अनुमानेनैव तत्सिद्धिः, तथाच शब्दः पृथिव्यादि-अष्टद्रव्यातिरिक्त-

आकाश वह है जिसमें समवायसम्बन्धसे शब्दस्वरूपगुण विद्यमान हो। वह आकाश एक है, व्यापक है और नित्य है ॥

कालस्य किं लक्षणं कति च भेदाः ?—

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

कालस्य लक्षणमाह—**अतीतेति** । व्यवहारो नाम=शब्दप्रयोगः, अतीतादिरित्यत्रादिपदेन वर्तमानत्व—भविष्यत्वपरिग्रहः, अतीतो=भूतकालः, वर्तमान = प्रचलितः कालः, भविष्यत्=आगामिकालः, तथाच घटोऽतीतः घटो भविष्यतीत्यादिरूपो योऽतीतादिव्यवहारस्तादृशव्यवहाराऽसाधारणकारणत्वं कालस्य लक्षणम् । अतीतादिशब्दप्रयोगश्च कालमभिव्याप्यैव भवतीति तत्र लक्षणसमन्वयः । तस्यैकत्वमाह—**स चैकेति** । विभुत्वनित्यत्वलक्षणे पूर्ववत् बोध्ये । कालो हि जगदाधारस्तत्र कालिकसम्बन्धेन सर्वोऽपि पदार्थो वर्तते, अप्रत्यक्षश्च काल इति ।

अतीत ( भूत ), भविष्यत्, वर्त्तमान के व्यवहारका कारण जो द्रव्य है वही काल कहलाता है । यह कालभी एक है सर्वव्यापक है, और नित्य है ।

दिशः किं लक्षणं कतिविधा च सा ?—

**प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका नित्या विभ्वी च ।**

दिशो लक्षणमाह—**प्राच्यादीति** । प्राच्यादिव्यवहारासाधारणकारणत्वं दिशो लक्षणम् । 'इयं प्राची इयं प्रतीची'त्यादिव्यवहारस्य दिश एव सम्भवात्लक्षणसमन्वयः । उदयाचलसन्निहिता या दिक् सा प्राची । अस्ताचलसन्निहिता या दिक् सा प्रतीची । (१)मेरो सन्निहिता या दिक् सोदीची । मेरोर्व्यवहिता या दिक् साऽवाची । **सा चैकेति** । दिगपि एका नित्या विभ्वीत्यर्थः, पूर्वपश्चिमादिभेदश्चौपाधिक एवेति ध्येयम् ।

दिशा वह है जो-पूर्व, पश्चिम, दक्षिण और उत्तर के व्यवहार का कारण ( द्रव्य ) हो । वह दिशा भी-एक है, नित्य है, और सर्वव्यापक है ॥

आत्मनः किं लक्षणं, कतिविधश्च सः ?—

**ज्ञानाधिकरणमात्मा । स द्विविधः—जीवात्मा परमात्मा**

---

द्रव्याश्रित अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् यद्धि तदाश्रितं तदेव नो आकाशमिति ।

( १ ) 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति वचनात् ।

**चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

आत्मनो लक्षणमाह—**ज्ञानाधिकरणमिति** । समवायेन ज्ञानाश्रयत्वमात्मनो लक्षणम् , ज्ञानरूपगुणस्य समवायेन आत्मन्येव सत्त्वाल्लक्षणसमन्वयः । आत्मानं विभजते—**स द्विविध इति** । **जीवात्मेति** । जन्यज्ञानाश्रयत्वं जीवात्मनो लक्षणम् , जन्यज्ञानस्य जीवात्मन्येव सत्त्वाल्लक्षणसमन्वयः । **परमात्मेति** । नित्यज्ञानाश्रयत्वं परमात्मनो लक्षणम् , परमात्मनि नित्यमेव ज्ञानं वर्तत इति लक्षणसमन्वय । तत्र = जीवात्मपरमात्मनोर्मध्ये, ईश्वरः सर्वज्ञः = परमात्मा निखिलवस्तुविषयकज्ञानवानित्यर्थ । **एक एवेति** । एवकारेण नानात्वव्यवच्छेदः । **जीवस्त्विति** । जीवात्मा तु इत्यर्थः । **प्रतिशरीरमिति** । तथाच जीवात्मनो नानात्वमित्यर्थ । **विभुर्नित्यश्चेति** । पूर्ववत् । जीवात्मनि स्वात्मा प्रत्यक्षः, परात्मा अप्रत्यक्ष , परमात्माऽपि अप्रत्यक्ष एवेति ध्येयम् ।

जिस द्रव्यमें समवायसम्बन्धसे ज्ञान रहता हो वही आत्मा है ( ज्ञानका अधिकरण आत्मा है, क्योंकि आत्मामें ज्ञान समवायसम्बन्धसे रहता है ) । वह आत्मा दो तरहकी है-जीवात्मा और परमात्मा । परमात्मा-ईश्वर है, वह सर्वज्ञ और एक है । जीवात्मा प्रत्येक शरीरमें भिन्न भिन्न है, व्यापक है और नित्य है ।

मनसः किं लक्षणं, कतिविधं च तत् ?—

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्च ॥**

मनसो लक्षणमाह—**सुखादीति** । उपलब्धि = साक्षात्कारः प्रत्यक्षमिति यावत् , तथाच सुखदुःखसाक्षात्कारहेतुत्वे सति इन्द्रियत्वं मनसो लक्षणम् , नैयायिकानां प्रत्यक्षप्रकारश्चैवम्—प्रथमं अदृष्टवशात् आत्मा मनसा संयुज्यते ततो मन इन्द्रियेण, तत इन्द्रियञ्च विषयेण, ततः प्रत्यक्षमिति । एवञ्च 'अहं सुखी, अहं दुःखी'इत्यादिमानसप्रत्यक्षात्मकं ज्ञानं प्रति आत्ममनःसंयोगस्य हेतुत्वान्मनसोऽपि कारणत्वमायातम् , तथाच सुखदुःखसाक्षात्कारहेतुत्वं मनसि विद्यते, एवं मनस इन्द्रियत्वादिन्द्रियत्वमप्यस्तीति लक्षणसमन्वयः । इन्द्रियपदानुपादाने आत्मन्यतिव्याप्तिरतस्तदुपादानम् । इन्द्रियमात्रोक्तौ चक्षुरादावतिव्याप्तिरिति विशेष्यदलम् ।

तत्=मन, प्रत्यात्मनियतत्वात्=प्रत्यात्मानं एकैकं मनः समर्प्यते, अन्यथा मनस एकत्वे आत्मनो विभुत्वाद्भवदीयाऽऽत्मना सह मदीयमनसः संयुक्तत्वात् ( सर्वेषां मनस एकत्वात् ) भवदीयसुखदुःखज्ञानं मह्य स्यात्, न चैतत्संभवतीति मनस-अनन्तत्वं बोध्यम्। **परमाणुरूपमिति**। परमाणोर्यद्रूपं अणुपरिमाणं तदित्यर्थः। **नित्यमिति**। मनो हि नित्य अप्रत्यक्षश्चेति बोध्यम्।

इति द्रव्यलक्षणनिरूपणम्।

मन वह कहलाता है, जिस ( इन्द्रिय ) से सभी प्रकारके सुख दुःख की उपलब्धि (ज्ञान) होती हो। मन हर एक जीवात्माके साथ भिन्न भिन्न है। तस्मात् वह अनन्त है परमाणु रूप है और नित्य है।।

## ( ३ ) गुणलक्षणप्रकरणम्।

रूपस्य किं लक्षणं कतिविधं च तत्?—

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरित-कपिशचित्रभेदात्सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि॥**

### अथ गुणलक्षणनिरूपणम्।

रूपस्य लक्षणमाह—**चक्षुरिति**। अत्र ग्राह्यत्वमित्यस्य=ग्रहविषयत्वमर्थः, ग्रहो नाम=प्रत्यक्षाख्यं ज्ञानम्, चक्षुः=चक्षुरिन्द्रियम्, तथाच चक्षुरिन्द्रियजन्यप्रत्यक्ष-विषयत्वं रूपस्य लक्षणम्, 'घटो' नील, पीतं वस्त्रम्, इत्यादिघटवस्त्रादिगतरूपाणां चक्षुषैव ग्रहणं भवति, न ह्यन्धो घटस्य नीलतां रक्ततां वाऽवलोकयतीति लक्षणसम-न्वय। अत्रैकं 'मात्र' इति पदमस्ति तस्य चक्षुरितिपदेन सहान्वयाच्चक्षुरिन्द्रिय-मात्रग्राह्यत्वमित्यर्थो आयाति, मात्रपदार्थश्चात्र=तदितराग्राह्यत्वे सति तद्ग्राह्यत्वरूप, तत्पदद्वयम्=चक्षुरिन्द्रियपरम्, तथाच चक्षुरितरेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य निष्कृष्टं लक्षणं बोध्यम्। अस्य लक्षणस्य लक्ष्ये समन्वयप्रकारश्चेत्थम्—चक्षुष्ट इतराणि इन्द्रियाणि=घ्राण–रसन–त्वक्–श्रोत्र–मनांसि तै रूपं न प्रत्यक्षीक्रियत इति तज्जन्यप्रत्यक्षाऽ-विषयत्वस्य एवं चक्षुरिन्द्रियेण प्रत्यक्षीकरणाच्चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुण-त्वस्य च तत्र सत्त्वात्, रूपस्य गुणपदार्थत्वात्।

अत्र सत्यन्तपदानुपादाने सङ्ख्याऽऽख्यगुणेऽतिव्याप्तिः, संख्या हि चक्षुषा त्वगिन्द्रियेण च गृह्यते, एवञ्च चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य तत्र सत्त्वादतस्तद्वारणाय सत्यन्तपदम् । तथाच संख्यायाः त्वगिन्द्रियेणापि ग्राह्यत्वाद्वारणम् । अतीन्द्रियगुरुत्वरूपगुणेऽतिव्याप्तिवारणाय चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सतीति । गुणत्वपदानुपादाने रूपत्वे रूपाभावे चाऽतिव्याप्तिः, 'यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते, इति नियमेन रूपत्वरूपाभावयोश्चक्षुषैव ग्रहणादतस्तद्वारणाय गुणपदम् । रूपं विभजते—**तच्चेति** । रूपं सप्तविधमित्यर्थः । कुत्र द्रव्ये किं किं रूपं वर्तते तदाह–**तत्र पृथिव्यामित्यादिना** । सप्तविधम्=सर्वं रूपं पृथिव्या वर्तत इत्यर्थः । केवलं शुक्लं रूपं द्वेधा–भास्वरम्–अभास्वरञ्च । तत्र अभास्वरशुक्लं रूपं जले । भास्वरशुक्लं=देदीप्यमानं शुक्लरूपं तेजसि वर्तत इति शेषः ।

रूप वही कहलाता है, जिस (गुण) का आंखोंसे प्रत्यक्ष होता हो । वह रूप सात प्रकार के हैं-शुक्ल, नील, पीत, रक्त, हरित, कपिश, और चित्र इस भेद से । वह रूप पृथिवी, जल और तेजमें रहता है । पृथिवीमें शुक्ल आदि सातों प्रकारका रूप रहता हैं । जलमें अभास्वरशुक्ल रूप है और तेजमें भास्वर शुक्ल रूप है ।

( विना चमकवाला श्वेतरूप 'अभास्वरशुक्ल' और चमकीला तथा प्रकाशक सफेदरूप 'भास्वरशुक्ल' कहलाता है ) ।

रसस्य किं लक्षणं कतिविधश्च सः ?—

**रसनाग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ।**

रसस्य लक्षणमाह—**रसनेति** । रसनया ग्राह्यो रसनाग्राह्यः, रसना=रसनेन्द्रियम्, ग्राह्यपदार्थश्च पूर्वोक्त एव, तथाच रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम् । 'आम्रो मधुरः कारवेल्लस्तिक्तः' इत्यादि आम्रादिगतमधुरतादीनां रसनेन्द्रियेणैव प्रत्यक्षं भवतीति तादृशप्रत्यक्षविषयत्वस्य षड्रसेषु सत्त्वात्तत्र च गुणत्वस्यापि वर्तमानत्वाल्लक्षणसमन्वयः । अत्र गुणत्वमात्रस्य लक्षणत्वे रूपादावतिव्याप्तिरतः सत्यन्तम् । सत्यन्तमात्रोक्तौ रसत्वे रसाभावे चाऽतिव्याप्तिः, 'यो गुणो यदिन्द्रियेणे'ति नियमादत उभयोरुपादानम् । रसस्य भेदानाह–**स चेति** । रसः षड्विध इत्यर्थः । रसगुणः कुत्र वर्तत इत्याह–**पृथिवीजलेति** । पृथिवीजलयोरेव रसो

नान्यत्रेति भाव.। **तत्रेति**। तत्र=पृथिवीजलयोर्मध्ये, षड्विधो रस. पृथिव्यामेव। जले तु मधुराख्य एक एव रस', अत्यन्तसौरातपतप्तस्य जलपानकाले मधुररसस्यैव तत्राऽनुभूयमानत्वादिति हृदयम्।

रस वह कहलाता है, जिस (गुण) का रसनेन्द्रिय (जीभ) से प्रत्यक्ष हो। वह रस छै प्रकार का है–मधुर, अम्ल, लवण, कटु, कषाय, और तिक्त इस भेद से। वह रस पृथिवी और जलमें रहता है। पृथिवीमें अम्ल आदि छै प्रकार का रस है। और जलमें केवल मधुर रस ही है।

[ जलमें अम्लादि रसकी प्रतीति उपाधि भेदसे हुआ करती है ]।

गन्धस्य किं लक्षणं तद्भेदश्च कः ?—

**घ्राणग्राह्यो गुणो गन्धः। स द्विविधः—सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः।**

गन्धस्य लक्षणमाह–**घ्राणग्राह्य इति**। घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणम्। 'पुष्पं सुरभि, पुरीषमसुरभि' इत्यादिपुष्पादिगतसौरभ्यादीना घ्राणेन्द्रियेणैव ग्रहणात्तादृशप्रत्यक्षविषयत्वस्य द्विविधगन्धे सत्त्वात्तत्र च गुणत्वस्यापि वर्तमानत्वाल्लक्षणसमन्वय.। गन्धं विभजते—**स द्विविध इति**। गन्धगुणः कुत्र वर्तत इत्याह–**पृथिवीमात्रेति**। पृथिव्यामेव गन्धो वर्तते नान्यत्र द्रव्ये इत्यर्थः।

'गन्ध' वह कहलाता है, जिस (गुण) का घ्राणेन्द्रिय ( नाक ) से प्रत्यक्ष हो। सुगन्ध और दुर्गन्ध के भेदसे वह गन्ध दो तरह की है और पृथिवी में ही रहती है।

स्पर्शस्य किं लक्षणं के च भेदाः ?—

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः—शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः॥**

स्पर्शस्य लक्षणमाह–**त्वगिन्द्रियेति**। मात्रपदार्थश्च तदितराग्राह्यत्वे सति तद्ग्राह्यत्वरूप, तथाच त्वगितरेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम्। स्पर्शगुणस्य त्वगितरपञ्चेन्द्रियै प्रत्यक्षं न भवति अथ च त्वगिन्द्रियेण प्रत्यक्षं भवतीति तादृशप्रतीतिविषयत्वस्य गुणत्वस्य च तत्र सत्त्वाल्लक्षणसङ्गति'। अत्र गुणत्वमात्रस्य लक्षणत्वे–रसादावतिव्याप्तिरतस्त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सतीति। रूपलक्षणवत्संख्यादावतिव्याप्तिवारणाय

प्रथमसत्यन्तदलम् । तथाच संख्यायाश्चक्षुरिन्द्रियेणापि ग्राह्यत्वाद्वारणम् । अतीन्द्रिय-गुरुत्वादावतिव्याप्तिवारणाय द्वितीयसत्यन्तम् । गुणपदानुपादाने स्पर्शत्वे स्पर्शाभावे चातिव्याप्तिः 'यो गुणो यदिन्द्रियेणे'तिनियमादतस्तदुपादानम् । स्पर्शं विभजते-**स चेति** । शीतस्पर्शः-उष्णस्पर्शः-अनुष्णाशीतस्पर्श इति भेदेन स्पर्शस्त्रिविध इत्यर्थः । स कुत्र वर्तत इत्याह-**पृथिव्यप्तेजोवायुवृत्तिरिति** । तत्र=चतुर्षु मध्ये, शीत-स्पर्शो जले एवेत्यर्थः । 'शीतं चन्दनम्' इति पृथिव्यां शैत्यप्रतीतिस्त्वौपाधिकी एव, जलगतशैत्यस्यैव तत्र भानादित्यर्थः । उष्णेति । उष्णस्पर्शस्तेजस्येवेत्यर्थः । अनुष्णाशीत=समशीतोष्णस्पर्शः पृथिवीवायुरूपद्रव्ययोर्वर्तत इत्यर्थः ।

स्पर्श वही कहाता है, जिस गुणका केवल त्वगिन्द्रिय (त्वचा)से प्रत्यक्ष होता हो। वह स्पर्श तीन प्रकारका है-शीत ( ठंढा ), उष्ण ( गर्म ) और अनुष्णाशीत ( न अधिक ठंढा न अधिक गर्म) । पृथिवी, जल, तेज और वायु इन चारोंमें स्पर्श रहता है । जलमें शीतस्पर्श, तेजमे उष्णस्पर्श पृथिवी और वायुमें अनुष्णाशीतस्पर्श है ।

रूपादिचतुष्टयं कुत्र पाकजमपाकजं वा कुत्र ?—

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥**

**रूपादीति** । रूपादिचतुष्टयम् = रूप-रस-गन्ध-स्पर्शाः, पृथिव्याम् = पृथिव्यामेव, पाकजम्=पाकजन्या इत्यर्थः । पाको नाम = विजातीयतेजःसंयोगः । अयं भावः—पृथिव्यामेव रूप-रस-गन्ध-स्पर्शाना पाको भवति, विजातीयतेजः-संयोगात् श्यामरूपनाशे घटो रक्तरूपवान् भवति, एवं तृणपुञ्जनिक्षेपादिजन्यविजा-तीयतेजःसंयोगेनाम्लरसनाशे आम्रो मधुररसतामासादयति, एवं गन्धस्पर्शावप्यू-हनीयौ । एवञ्च पृथिव्यामेव तादृशतादृशविजातीयतेजःसंयोगादेव रूपपरावृत्तिः, न तु जलादिषु एतेषा पाकः, नहि शतधाऽपि ध्मायमाने जले रूपादिकं परावर्तते इति तत्रस्था रूपरसादयो अपाकजा एव । पृथिव्यामपि, वैशेषिकमतेन-पार्थिवपर-माणुष्वेव पाकः, नैयायिकमते तु-द्व्यणुकघटादावपीति संक्षेपः । अनित्यम् = जन्य-त्वात्तच्चतुष्टयमनित्यमित्यर्थः । अन्यत्र = जलतेजोवायुदिषु, रूपादिकमिति शेषः अपाकजम् = पाकजभिन्नम् नित्यम्—अनित्यञ्च भवतीति भावः । नित्यगतम् = परमाणुरूपजलादिगतं रूपादिकमित्यर्थः । अनित्यगतम् = कार्यरूपजलादिगतम् ( द्व्यणुकादिगतम् ) अनित्यमित्यर्थः ।

पृथिवीमें रूप, रस, गन्ध और स्पर्श ये चार प्रकारके गुण पाकज (तेजके संयोगसे उत्पन्न होने वाले ) हैं तथा अनित्य हैं, और अन्यत्र ( जल, तेज, वायुमें ) अर्थात् जलमें रहने वाले-रूप-रस-स्पर्श, तेजमें रहनेवाले-रूप-स्पर्श, वायुमें रहनेवाला-स्पर्श अपाकज हैं। वह नित्य और अनित्य दोनों है। नित्यगत ( जल आदि के परमाणु में रहनेवाले) रूप, रस, स्पर्श नित्य हैं, और अनित्यगत ( घट-पट आदि कार्यमें रहनेवाले ) अनित्य हैं।

सङ्ख्यायाः किं लक्षणम्, कुत्र च सा वर्त्तते ?—

**एकत्वादिव्यवहारहेतुः सङ्ख्या । सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥**

सख्याया लक्षणमाह—**एकत्वादीति** । एकत्वादिव्यवहारासाधारणकारणत्वं संख्याया लक्षणम् । 'अयमेक', इमौ द्वौ' इत्यादिरूप. एकत्वसख्यात. परार्धसख्यापर्यन्तो यो व्यवहारः=शब्दप्रयोगस्तादृशव्यवहारं प्रति असाधारणकारणीभूता या सा सङ्ख्यैवेति तत्र लक्षणसमन्वय. । कार्यमात्रं प्रति कारणीभूतेषु ईश्वरदिगदृष्टकालादिषु अतिव्याप्तिवारणायाऽसाधारणेति, तथाच तेषा साधारणकारणत्वान्न दोषः । सङ्ख्या कुत्र वर्तत इत्याह—**सेति** । नवसु द्रव्येषु वर्तत इत्यर्थ । अथ सङ्ख्यायाः कुत्र विश्राम इत्याह—**एकत्वादीति** । तदुक्तम्—

"एकं दश शतञ्चैव सहस्रमयुतं तथा । लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च ॥

वृन्दं खर्वो निखर्वश्च शङ्ख पद्मश्च सागरः ।

अन्त्यं मध्यं परार्धञ्च दशवृद्धया यथाक्रमम् ॥" इति ।

एकत्वम् = एकत्वसङ्ख्या, नित्या अनित्या चेत्यर्थ । नित्यगतम् = परमाणुगतएकत्वसंख्या नित्येत्यर्थ । अनित्यगतम्=द्व्यणुकादिकार्यगता च साऽनित्येत्यर्थ । द्वित्वादिपरार्धान्ता सङ्ख्या तु सर्वत्र परमाणुषु द्व्यणुकादौ चाऽनित्यैवेत्यर्थ ।

'संख्या' वही कहलाती है, जो एक, दो, तीन, चार आदि व्यवहारका कारण हो। वह संख्या पृथिवी आदि नव द्रव्योंमें रहती है, और एकसे परार्ध पर्यन्त होती है। एकत्व संख्या दो प्रकारकी होती है—नित्य और अनित्य। पृथिवी, जल, तेज, वायु के परमाणु, तथा आकाश, काल, दिशा, आत्मा और मन इन नित्य-पदार्थोंमें रहनेवाला एकत्व नित्य है, और घट-पट आदि अनित्य-पदार्थोंमें रहने वाला एकत्व अनित्य है। परन्तु द्वित्वादि संख्या तो सर्वत्र अनित्य ही है।

परिमाणस्य किं लक्षणं के च तस्य भेदाः ?—

**मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्—अणु, महत्, दीर्घं, ह्रस्वं, चेति ॥**

परिमाणस्य लक्षणमाह—**मानेति** । मानम् = परिमितिः, तस्या यो व्यवहारः = 'इदं महत्, इदमणु, इत्याद्यात्मकस्तं प्रति यदसाधारणकारण तत्परिमाणमित्यर्थः । तथाच परिमितिव्यवहाराऽसाधारणकारणत्वं परिमाणस्य लक्षणम्, 'आकाशं महत्, परमाणुः—अणुः' इति व्यवहारस्य परिमाणेनैव जननाल्लक्षणसमन्वयः । तत् कुत्र वर्तत इत्याह—**नवद्रव्येति** । परिमाणं विभजते—**तच्चतुर्विधमिति** । अणु, महत्, दीर्घम्, ह्रस्वमिति भेदेन परिमाणं चतुर्विधमित्यर्थः । अत्र अणुत्वमहत्वादयः सर्वा जातय एव । परिमाणमपि द्विविधम् नित्यमनित्यं च, नित्यगतं नित्यम्, अनित्यगतमनित्यमित्यर्थः ।

परिमाण वह है जो एक हाथ, दो हाथ, एक सेर, दो सेर इत्यादि नापने और तौलनेके व्यवहार का प्रधान कारण हो । परिमाण नव द्रव्योंमें रहता है और वह चार प्रकारका है—अणु ( अत्यन्त छोटा ), महत् ( बडा ), दीर्घ ( लम्बा ) और ह्रस्व ( नाटा ) इस भेद से ।

पृथक्त्वस्य किं लक्षणम् ?—

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

पृथक्त्वस्य लक्षणमाह—**पृथगिति** । 'इदमस्मात्पृथगि'तिव्यवहाराऽसाधारणकारणत्वं पृथक्त्वस्य लक्षणम् । **सर्वद्रव्येति** । पृथक्त्वं नवसु द्रव्येषु वर्तत इति भावः । सङ्ख्यादिवदेकपृथक्त्वमपि नित्यानित्यभेदेन द्विधा, परमाणुगतं तन्नित्यम्, द्व्यणुकादिगतञ्चानित्यम् । द्विपृथक्त्वादिकन्तु सर्वत्राऽनित्यमेव ।

यह घट पटसे भिन्न है इत्यादि व्यवहारका प्रधान कारण 'पृथक्त्व' है । पृथक्त्व भी उक्त नव द्रव्योंमें रहता है ।

संयोगस्य किं लक्षणम् ?—

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥**

संयोगस्य लक्षणमाह—**संयुक्तेति** । 'इमौ संयुक्तौ' इत्याकारको यो व्यवहारस्तादृशव्यवहाराऽसाधारणकारणत्वं संयोगस्य लक्षणम् । अप्राप्तयोर्द्रव्ययोर्या प्राप्तिस्सैव संयोग इति हृदयम् । **सर्वद्रव्येति** । नवद्रव्यवृत्तिस्संयोग इत्यर्थः । स चान्यतरकर्मजः, उभयकर्मजः, सयोगजश्चेति त्रिविधो बोध्यः ।

ये दोनों पदार्थ सम्मिलित है इत्यादि व्यवहारका असाधारणकारण 'संयोग' है। यह संयोग भी उक्त नव द्रव्योंमें रहता है।

विभागस्य कि लक्षणम् ?—

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥**

विभागस्य लक्षणमाह—**संयोगनाशक इति** । संयोगनाशकत्वे सति गुणत्वं विभागस्य लक्षणम् । गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिरत· सत्यन्तम् । तन्मात्रोक्तौ क्रियायामतिव्याप्ति, क्रियाया अपि (१)संयोगनाशकत्वादत उभयोरुपादानम् । विभागोऽपि नवसु द्रव्येषु वर्तत इत्याह—**सर्वद्रव्येति** । सयोगवद्विभागोऽपि त्रिधा द्रष्टव्य. ।

परस्पर मिले हुए पदार्थोंके विभाग ( अलग-अलग ) होनेसे संयोग नष्ट हो जाता है, इसलिये संयोगको नाश करने वाला गुण विभाग है। यह विभाग भी उक्त सभी नव द्रव्योंमें रहता है।

परत्वापरत्वयोः किं लक्षणं, के,च भेदा. ?—

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते च द्विविधे—दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥**

परत्वापरत्वयोर्लक्षणे आह—**पराऽपरेति** । परव्यवहारासाधारणकारणत्वं परत्वस्य, अपरव्यवहारासाधारणकारणत्वञ्चापरत्वस्य लक्षणमित्यर्थः । परत्वापरत्वे केषु द्रव्येषु वर्त्तेते इत्याह—**पृथिवीति** । पृथिवीजलतेजवायुमनोवृत्तिनी परत्वापरत्व इत्यर्थः । **त इति** । प्रत्येकं परत्वं अपरत्वं च द्विविधमित्यर्थ । द्वैविध्यं

( १ ) प्रथमं क्रिया (उत्तरदेशग्रामादिगमनानुकूला) ततो विभाग (स्वगृहत·) तत. पूर्वदेशसंयोग ( गृहसंयोग ) नाश , तत उत्तरदेश (ग्रामादि) संयोग , ततः क्रियानाशः, अयं क्रमस्सर्वत्र गमनादिषु भवति, तथाच प्रथमक्षणीयक्रियाया अपि तृतीयक्षणवृत्तिसयोगनाशं प्रति हेतुत्वात्संयोगनाशकत्वं सुतरामेव क्रियायामस्ति, गुणपदोपादाने तु क्रियाया गुणत्वाभावान्नातिव्याप्ति । एतेन संयोगनाशकत्वमपि विभागे स्फुटीकृतमिति ।

दर्शयति—**दिगिति**। दिक्कृतं-परत्वं, कालकृतं-परत्वं, दिक्कृतमपरत्वं, कालकृतमपरत्वमिति भेदेन परत्वमपरत्वञ्च द्विविधमित्यर्थः । दिक्कृतं-परत्वमुदाहरति—**दूरस्थ इति** । 'प्रयागात्काशीतो गया परा' इति प्रतीत्या काशीतो गयायां दैशिकं परत्वम् । दिक्कृतमपरत्वमुदाहरति—**समीपस्थ इति** । 'प्रयागात् गयातः काशी अपरा' इति काश्याः दैशिकमपरत्वम् । कालिकपरत्वमुदाहरति—**ज्येष्ठ इति** । 'रामो लक्ष्मणात्परः' इति प्रतीत्या रामस्य कालिकपरत्वम् । कालिकमपरत्वमुदाहरति—**कनिष्ठ इति** । 'रामाल्लक्ष्मणोऽपरः' इति प्रतीत्या लक्ष्मणस्य कालिकाऽपरत्वमिति भावः ।

यह पर ( दूर ) है, और यह अपर ( नजदीक ) है इस व्यवहारका असाधारण-कारण 'परत्व' और 'अपरत्व' है । ये (परत्व-अपरत्च) पृथिवी जल, तेज, वायु और मनमें रहते हैं ।

ये भी दो तरहके हैं-दिक्कृतपरत्व और दिक्कृत अपरत्व, कालकृतपरत्व और कालकृत अपरत्व । दूरस्थ घट-पटादि पदार्थोंमें दिक्कृत परत्व है, और समीपस्थ पदार्थोंमें दिक्कृत-अपरत्व है । ज्येष्ठ(बडे) में कालकृत-परत्व है और कनिष्ठ ( छोटे ) में कालकृत-अपरत्व है ।

गुरुत्वस्य किं लक्षणम् ?—

**आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ॥**

गुरुत्वस्य लक्षणमाह—**आद्यपतनेति** । आद्यपतनासमवायिकारणत्वं गुरुत्वस्य लक्षणम् । वृक्षात्पनसस्य यदाद्यं पतनं तद्धि गुरुत्वादेव जायते, एवमतिगुरुत्वादेव भूम्यां पतति सकलं वस्तु, गुरुत्वं हि असमवायिकारणं तत्र इति लक्षणसमन्वयः । असमवायिकारणत्वविचारोऽग्रे निरूपयिष्यते । अत्र आद्यपदानुपादाने वेगाख्यसंस्कारेऽतिव्याप्तिः,द्वितीयपतनं प्रति वेगस्याऽसमवायिकारणत्वादतो आद्येति। गुरुत्वं कुत्र वर्तत इत्याह—**पृथिवीजलवृत्तीति** । नैयायिकमते गुरुत्वस्य प्रत्यक्षं न भवतीति ध्येयम् ।

प्रथम पतनका असमवायिकारणीभूत जो गुण वह गुरुत्व ( भारीपन ) है। वह पृथिवी और जलमें रहता है ।

द्रवत्वस्य,किं लक्षणं के च भेदाः ?—

**आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम्—सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं जले। नैमि-**

त्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ ॥

द्रवत्वस्य लक्षणमाह—**आद्यस्यन्दनेति**। स्यन्दनं=परिस्यन्दः आद्यस्यन्दनासमवायिकारणत्वं द्रवत्वस्य लक्षणम्, नवशरावादिगतं द्रवमेव जलादिकं स्वत एव स्यन्दते, तादृशस्यन्दनं प्रति द्रवत्वमेव असमवायिकारणमस्तीति लक्षणसमन्वय.। अत्रापि वेगेऽतिव्याप्तिवारणायाद्येति पदम्। द्रवत्वं कुत्र वर्तत इत्याह—**पृथिव्यप्तेजोवृत्तीति**। द्रवत्वं विभजते—**तदिति**। द्वैविध्यमाह—**सांसिद्धिकं नैमित्तिकञ्चेति**। सांसिद्धिकं=निमित्तविशेषमनपेक्ष्य, स्वत. अधोदेशप्रसरणशालिद्रवत्वम् (स्वाभाविकं द्रवत्वमित्यर्थः)। नैमित्तिकं=निमित्तात्=अग्निसंयोगादिरूपाज्जायमानं द्रवत्वं पृथिवीतेजसोरस्तीति भाव·। अथ पृथिव्या कुत्र नैमित्तिकं द्रवत्वं तदाह—**घृतादाविति**। तेजसि नैमित्तिकं द्रवत्वं दर्शयति—**सुवर्णादाविति**।

प्रथम स्यन्दन (बहना और टपकना) का असमवायिकारण गुण द्रवत्व है। वह पृथिवी, जल, और तेजमें रहता है। द्रवत्व भी दो तरहका है—सांसिद्धिक और नैमित्तिक। (स्वभावसे होनेवाला द्रवत्व सांसिद्धिक-द्रवत्व है, और अग्नि आदि तेजोंसे होने वाला द्रवत्व नैमित्तिक-द्रवत्व है)। सांसिद्धिक द्रवत्व जलमें हैं और नैमित्तिकद्रवत्व-पृथिवी तथा तेज दोनोंमें है। घृत, मोम-सुवर्ण आदि पदार्थों में नैमित्तिकद्रवत्व हैं, कारण वह अग्नि आदि तैजस पदार्थके संयोगसे उत्पन्न होता है, और जलमें विना कारणका स्वाभाविकही द्रवत्व है।

स्नेहस्य किं लक्षणम्, कुत्र च सः?—

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः॥

स्नेहस्य लक्षणमाह—**चूर्णादीति**। पिण्डीभाव.=संयोगविशेष·, तथाच चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्। पिण्डीभावे स्नेहस्यैवासाधारणकारणत्वमस्तीति तत्र लक्षणसमन्वय.। कालादावतिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय सत्यन्तम्। स्नेहः कुत्र वर्तत इत्याह—**जलमात्रेति**।

पीसे हुए जव आदि के चूर्णमें जिसे मिलाकर गोली बनाया जाय उसी गुणका नाम 'स्नेह (चिकनाहट) है। स्नेह सिर्फ जलमें ही रहता है।

शब्दस्य किं लक्षणम्, कतिविधश्च सः?—

श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स द्विविधः—

**ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥**

शब्दस्य लक्षणमाह—**श्रोत्रेति** । ग्राह्यत्वम् = प्रत्यक्षविषयत्वम् , श्रोत्रम् = श्रोत्रेन्द्रियम् । तस्य जन्यत्वसम्बन्धेन प्रत्यक्षेऽन्वयः, तथाच श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् , शब्दस्य श्रोत्रेन्द्रियेणैव प्रत्यक्षसम्भवात्तादृशप्रत्यक्षविषयत्वस्य शब्दे सत्त्वाल्लक्षणसमन्वयः । शब्दः कुत्र वर्तत इत्याह—**आकाशमात्रवृत्तिरिति** । शब्दं विभजते—**स द्विविध इति** । **तत्रेति** । ध्वनिः, आत्मा = स्वरूपं यस्य स इति विग्रहेण ध्वनिस्वरूपश्शब्दो भेरीदुन्दुभिवीणादिवादनजन्यः । वर्णात्मकः=वर्णस्वरूपः, अत्रादिपदेन प्राकृतभाषादेरुपसंग्रहः ।

शब्द वही है—जिस गुणका श्रोत्रेन्द्रिय ( कान ) से प्रत्यक्ष होता हो । वह शब्द केवल आकाशमें ही रहता है । शब्द दो तरहका है—ध्वन्यात्मक और वर्णात्मक । भेरी (नगाड़ा) आदि बाजा बजानेसे जो शब्द उत्पन्न होता है वह ध्वन्यात्मक-शब्द कहा जाता है । और कण्ठसे संस्कृत भाषा आदि रूप जो शब्द निकलता है वह वर्णात्मक-शब्द कहलाता है ।

बुद्धेः किं लक्षणं कतिविधा च सा ?—

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा—स्मृतिरनुभवश्च ॥**

बुद्धेर्लक्षणमाह—**सर्वव्यवहारेति** । व्यवहारः=शब्दप्रयोगः, तथाच सर्वव्यवहारहेतुत्वे सति गुणत्वं बुद्धेर्लक्षणम् । घटादिज्ञानं विना घटादिशब्दप्रयोगाऽसम्भवाज्ज्ञानस्य सर्वव्यवहारहेतुत्वमस्तीति लक्षणसमन्वयः । बुद्धिर्ज्ञानमिति पर्यायान्तरमिति द्योतनाय, न तु साङ्ख्यानामिव बुद्धेःपदार्थान्तरत्वमिति । बुद्धिं विभजते—**सा द्विविधेति** । द्वैविध्यमाह—**स्मृतिरनुभवश्चेति** ।

सभी तरहके व्यवहार (शब्दप्रयोग) में जो गुण कारण होता हो वही बुद्धि है । वह बुद्धि दो प्रकार की है-स्मृति ( स्मरण ) और अनुभव इस भेद से । बुद्धिको ही ज्ञान इस शब्दसे कहते हैं ।

स्मृतेः किं लक्षणम् ?—

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥**

तत्र स्मृतिलक्षणमाह—**संस्कारेति** । मात्रपदस्य तदितराजन्यत्वे सति तज्जन्यत्वमर्थः, तथाच संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृते-

लक्षणम् । ज्ञानत्वमात्रोक्तौ अनुभवेऽतिव्याप्तिरतस्संस्कारजन्यत्वे सतीति । संस्कारजन्यत्वमात्रोक्तौ संस्कारध्वंसेऽतिव्याप्ति , ध्वंसं प्रति प्रतियोगिनः कारणत्वात् । अयं भावः—घटध्वस प्रति प्रतियोगिनः कारणत्वमस्ति,तथाहि—यस्य अभावो भवति स प्रतियोगीति गीयते, प्रकृते घटस्याभाव ( ध्वंस ) ग्रहणाद्धट. प्रतियोगी, स च घटध्वंसं प्रति हेतु॰, जगति घटपदार्थस्याऽलीकत्वे तद्ध्वंस कथमपि न सम्भवतीति घटस्यापि घटध्वंसे कारणता स्फुटैव, तथैवात्रापि संस्कारध्वंसं प्रत्यपि संस्कारस्य कारणत्वमिति तत्रातिव्याप्तिरतो ज्ञानपदम् , एवञ्च संस्कारध्वंसे ज्ञानत्वाभावान्न दोष । संस्कारेतराजन्यत्वे सतीत्यनुपादाने प्रत्यभिज्ञायामतिव्याप्तिः, तथाहि—पुरोवर्तिनि पूर्वदृष्टस्याभेदावगाहिज्ञानं प्रत्यभिज्ञा, तदाकारश्च 'सोऽयं देवदत्त ' इति, इदं हि ज्ञानं संस्कारेन्द्रियसन्निकर्षाभ्या जायते, तत्र तत्तांशे संस्कारः इदन्तांशे इन्द्रियसन्निकर्षश्च हेतु॰, तथाच संस्कारजन्यत्वे सति ज्ञानत्वस्य तत्र सत्त्वादतिव्याप्तिरतस्सत्यन्तपदं देयम् ; एवञ्च प्रत्यभिज्ञाया इन्द्रियसन्निकर्षेणापि जन्यत्वान्न संस्कारेतराजन्यत्वमिति न कोऽपि दोष॰ ।

स्मृति उसीका नाम है, जो ज्ञान केवल संस्कारसे ही उत्पन्न होता हो ।

अनुभवस्य किं लक्षणम् , के च भेदाः ?—

**तद्भिन्नं ज्ञानमनुभवः । स द्विविधः—यथार्थोऽयथार्थश्च ॥**

अनुभवस्य लक्षणमाह—**तद्भिन्नमिति** । स्मृतिभिन्नत्वे सति ज्ञानत्वं अनुभवस्य लक्षणम् । ज्ञानत्वमात्रोक्तौ स्मरणेऽतिव्याप्ति , स्मृतिभिन्नत्वमात्रोक्तौ च उदासीनघटादावतिव्याप्तिरत उभयोरुपादानम् । अनुभवं विभजते—**स द्विविध इति** । यथार्थोऽनुभव –अयथार्थानुभव इति भेदेनानुभवो द्विविध इत्यर्थ॰ ।

स्मृतिसे भिन्न जो ज्ञान है उसीका नाम 'अनुभव' है । अनुभव भी दो तरहका है–यथार्थ-अनुभव ( सच्चा ज्ञान ) और अयथार्थ-अनुभव ( मिथ्या ज्ञान ) ।

यथार्थानुभवस्य किं लक्षणम् ?—

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः । (यथा–रजते 'इदं रजतमि'ति ज्ञानम्) । सैव प्रमेत्युच्यते ।**

यथार्थानुभवस्य लक्षणमाह—**तद्वतीति** । तद्वतीत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन च प्रकारीभूतो धर्मो ग्राह्यः, तथाच तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थाऽनुभवस्य लक्षणम् । उदाहरति—

**यथा रजते 'इदं रजतम्' इति ।** लक्षणसमन्वयप्रकारश्चैवम्—अत्र रजतत्वं प्रकारः, रजतञ्च विशेष्यमिति, विशेषणमेव प्रकार इत्युच्यते। एवञ्च तत्पदेन=रजतत्वं ग्राह्य तद्वद्यद्रजतं तन्निष्ठा या विशेष्यता सा किल एतज्ज्ञानीया (एतज्ज्ञाननिरूपिता) अस्तीत्यतस्तन्निरूपकत्वस्य, एव तन्निष्ठा=रजतत्वनिष्ठा या प्रकारता तन्निरूपकत्वस्य अनुभवत्वस्य च प्रकृतज्ञाने सत्वात् । अत्र—अनुभवत्वमात्रस्य लक्षणत्वे-निर्विकल्पकेऽतिव्याप्तिरतस्तत्प्रकारकत्वे सतीति । तत्प्रकारकत्वे सति अनुभवत्व-मित्युक्तौ—अयथार्थाऽनुभवेऽतिव्याप्तिः । तथाहि—शुक्तौ 'इदं रजतम्' इति ज्ञानं भ्रमः, तत्र तन्निष्ठा=रजतत्वनिष्ठा या प्रकारता तन्निरूपकत्वस्य अनुभवत्वस्य च सत्त्वादतस्तद्वन्निष्ठविशेष्यतानिरूपकत्वे सतीत्युपादानम् । तथाचात्र विशेष्यतायाः शुक्तिनिष्ठत्वेन रजतत्ववद्रजते ज्ञानीयविशेष्यताया अवृत्तित्वात्तन्निरूपकत्वस्य प्रकृतज्ञानेऽसत्त्वात्तद्वारणम् । स्मृतावतिव्याप्तिवारणायाऽनुभवत्वमिति ।

नन्वेवं सत्यपि अयथार्थानुभवेऽतिव्याप्तिस्तदवस्थैव, तथाहि—'रङ्गरजतयोः इमे रजतरङ्गे' इति हि समूहालम्बनात्मकं ज्ञानम् (अयथार्थानुभवः)। समूहालम्बनज्ञानत्वन्नाम=नानामुख्यविशेष्यताऽवगाहिज्ञानत्वम्, अत्र रङ्गस्य रजतस्य च मुख्यविशेष्यतावत्त्वाद्भवति तदवगाहिज्ञानस्य समूहालम्बनात्मकता, रजतत्वाभाववति रङ्गे रजतत्वप्रकारकत्वस्य, रजते च रङ्गत्वाभाववति रङ्गत्वप्रकारकत्वस्यावगाहनादस्य ज्ञानस्य भ्रमत्वं बोध्यम्, एवञ्चात्र—तद्वन्निष्ठा=रजतत्ववद्रजतनिष्ठा या विशेष्यता तन्निरूपकत्वस्य, तन्निष्ठ (रजतत्वनिष्ठ) प्रकारतानिरूपकत्वस्य च सत्त्वात्, ज्ञाने विशेष्यीभूतस्य रजतस्य प्रकारीभूतस्य रजतत्वस्य च वर्तमानत्वादिति चेत्। सत्यम् । प्रकारतावत् विशेष्यतायाः यो हि ज्ञाने पृथगन्वयः क्रियते (विशेष्यकत्वे सतीत्यादिरूपः) तमकृत्वा प्रकारतायां विशेष्यताया अन्वयं कृत्वा तादृशप्रकारताकज्ञानस्य लक्षणकरणेनाऽदोषात्, तथाच तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तादृशप्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य निष्कृष्टं लक्षणम् । प्रकृते च तद्वन्निष्ठरजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितत्वस्य रजतत्वनिष्ठप्रकारतायामसत्त्वाद्रङ्गत्वेन रजतस्यावगाहनात् । एवमेवाऽयथार्थानुभवलक्षणेऽपि निष्कृष्टलक्षणरीतिरूह्या । सैव=यथार्थानुभव एव, शास्त्रे 'प्रमा' इति पदेन गीयत इत्यर्थ ।

**जो वस्तु वास्तवमें जिस तरहका हो उसको उसी तरहका समझना यही यथार्थ-**

अनुभव कहलाता है। जैसे-रजत ( चांदी ) में रजतत्व विशेषणक और रजत विशेष्यक ज्ञान अर्थात् चांदीको चांदी और सोनेको सोना समझना। इसीका ( यथार्थानुभवका ) नाम प्रमा भी है।

अयथार्थानुभवस्य लक्षणं किम् ?—

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः। ( यथा-शुक्तौ 'इदं रजतमि'ति ज्ञानम् )। सैवाप्रमेत्युच्यते॥**

अयथार्थानुभवस्य लक्षणमाह—**तदभाववतीति**। तथाच तदभाववन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणम्। उदाहरति—**यथा शुक्ताविति**। शुक्तौ 'इदं रजतम्' इति ज्ञाने इदंपदार्थे शुक्तौ रजतत्वास्याऽवर्तमानत्वेन रजतत्वाभावच्छुक्तिनिष्ठा या विशेष्यता तन्निरूपकत्वस्य, अथच रजतत्वस्य ज्ञाने प्रकारतया तन्निष्ट ( रजतत्वनिष्ठ ) प्रकारतानिरूपकत्वस्य अनुभवत्वस्य च तत्र सत्त्वाल्लक्षणसमन्वयः। अत्राऽनुभवत्वमात्रस्य लक्षणत्वे निर्विकल्पकेऽतिव्याप्तिरतस्तत्प्रकारकत्वे सतीति। तावन्मात्रोपादाने यथार्थानुभवे 'अयं घटः' इति ज्ञानेऽतिव्याप्तिस्तत्र घटत्वस्य प्रकारत्वादतस्तदभावन्निष्ठविशेष्यताकत्वे सतीति।

अत्रापि 'रङ्गरजतयोः इमे रङ्गरजते' इति प्रमायामतिव्याप्ति, एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रङ्गत्वरजतत्वोभयप्रकारकत्वेन च रङ्गत्वाभाववद्रजतनिष्ठविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वादतस्तदभावन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठाप्रकारता तन्निरूपकत्वे सति अनुभवत्वम् अयथार्थानुभवस्य निष्कृष्ट लक्षणं वोध्यम्। तथाचात्र रजतत्वाभावद्रङ्गनिष्ठविशेष्यतानिरूपितत्वस्य रजतत्वनिष्ठप्रकारतायामसत्त्वात्, रजतत्वेनैव रजतस्याऽवगाहनान्नातिव्याप्तिरिति संक्षेप।
सैव=अयथार्थानुभव एव, अप्रमा=भ्रम इत्युच्यत इति भाव।

'अयथार्थ-अनुभव' (मिथ्याज्ञान) उसे कहते हैं जो चीज वास्तवमें उस तरहकी न हो उसे वैसी ही समझना। जैसे सींपको चांदी और रस्सीको सर्प समझना। इसीका ( अयथार्थानुभवका ) नाम अप्रमा है।

यथार्थानुभवभेदा के ?—

**यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात्॥**

यथार्थोऽनुभवोऽस्मिन् शास्त्रे प्रमेतिपदेन गीयत इति तु उक्तपूर्वम्, इदानीं

तामेव लक्षितां प्रमा विभजते—**यथार्थेति**। प्रत्यक्षं–अनुमितिः–उपमितिः–शाब्द-बोध इति भेदेन प्रमा चतुर्विधेत्यर्थः ।

यथार्थ-अनुभव चार तरह का होता है-प्रत्यक्ष, अनुमिति, उपमिति और शाब्द इस भेद से ।

प्रत्यक्ष स्वरूप यथार्थानुभव जैसे-'अयं घटः' ( यह घडा है ) । अनुमितिस्वरूप यथार्थानुभव जैसे—'पर्वतो वह्निमान्' ( पर्वतमें आग रहती है ) । उपमिति स्वरूप यथार्थानुभव जैसेः—'गवयो गवयपदवाच्यः ( गोसदृश जो वन का पशु वह गवय इस पदका अर्थ हैं ) । शाब्दबोध स्वरूप यथार्थानुभव जैसेः–अहङ्गच्छामीति वाक्य-जन्यं ज्ञानं 'गमनानुकूलकृतिमानहम्' ( मैं जाता हूं ) ।

तत्करणं कतिविधम् ?—

## तत्करणमपि चतुर्विधं–प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

प्रमायाश्चातुर्विध्यात्तत्करणानामपि चातुर्विध्यमावश्यकमिति प्रमाकरणान्याह—**तत्करणमिति** । तत्पदम्=प्रमापरम् , प्रमाकरणमपि प्रत्यक्ष-अनुमान-उपमान–शब्दभेदेन चतुर्विधमस्तीत्यर्थः । एतान्येव प्रमाणानि, एभिः किल सकलस्य वस्तुनः सिद्धिर्भवति, अत्रैव च निखिलदर्शनेषु न्यायदर्शनस्य मूर्धन्यत्वम् , यतो नैया-यिका एव प्रमाणविचारका इति सर्वतन्त्रसिद्धान्त इति ध्येयम् ।

यथार्थ अनुभवके करण ( असाधारण कारण ) भी चार प्रकारके होते हैं–प्रत्यक्ष, अनुमान उपमान, और शब्द इस भेद से । प्रत्यक्षस्वरूप करण–इन्द्रियाँ है । अनुमानस्वरूप करण–लिंग परामर्श है । उपमानस्वरूप करण–सादृश्यज्ञान है । शब्द स्वरूप करण सत्यवादियों का कथन है ।

करणस्य किं लक्षणम् ?—

## असाधारणं कारणं करणम् ॥

ननु करणं करणं यदुच्यते तत्किमित्याशङ्कायां न हि करणं पदार्थान्तरं किन्तु असाधारणकारणमेवेत्याह—**असाधारणेति** । व्यापारवदित्यपि पदं योजनीयम् , तथाच व्यापारवदसाधारणकारणत्वं करणस्य लक्षणम् । व्यापारवत्पदं असाधारण-पदञ्च कारणे विशेषणम् । कारणं हि द्विविधमस्ति–साधारणम्–असाधारणं चेति भेदात् । तत्र साधारणकारणं नाम—कार्यमात्रं प्रति यद्यत्कारणं तत्तदेव, यथा—ईश्वरः, कालो दिगादयश्च । असाधारणकारणं नाम–कार्यविशेषं प्रति यत्कारणं तत् , यथा—घटरूपकार्योत्पत्तिं प्रति दण्डः, पटं प्रति तन्तव इत्यादि । व्यापारत्वञ्च—

तज्जन्यत्वे सति तज्जन्यजनकत्वम् , यथा—घटरूपं कार्यं फलम् , कुलालचक्रस्य भ्रमिर्व्यापारः, दण्डश्च करणम् । तत्पदेन–असाधारणकारणं दण्डो गृह्यते तज्जन्यत्वं भ्रमिरूपव्यापारेऽस्ति, एवं तज्जन्यः = दण्डजन्यो यो घटस्तज्जनकत्वमपि तत्रेति भ्रम्यां व्यापारलक्षणसङ्गतिः, तादृशव्यापारवान् दण्डः, एवञ्च व्यापारवत्त्वस्य—असाधारणकारणत्वस्य च दण्डे सत्त्वाद्दण्डस्य घटादिकार्यं प्रति करणत्वमायातमिति तत्त्वम् । एवमेव प्रत्यक्षप्रमाणं करणम् , इन्द्रियसन्निकर्षो व्यापार , प्रत्यक्षप्रमा फलमित्यादावप्यूह्यम् ।

'करण' वह कहलाता है, जो कार्यके प्रति असाधारण ( विशेष ) कारण हो ।

( साधारण कारण वह कहलाता है, जो सभी कार्यों की उत्पत्ति का कारण हो जैसे—ईश्वर, काल आदि )।

कारणस्य किं लक्षणम् ?—

## कार्यनियतपूर्ववृत्ति कारणम् ॥

ननु किन्नाम कारणत्वमित्याह—**कार्यनियतेति** । कार्यं प्रति नियता = नियमेन पूर्ववृत्तिता यस्येति विग्रहेण कार्योत्पत्तेः पूर्वक्षणे नियमेन यद्वर्तते तदेव कारणमिति यथाश्रुतार्थो लभ्यते। निष्कृष्टार्थस्तु—नियतत्वम्=व्यापकत्वम् , व्यापकत्वञ्च—तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम् , पूर्ववृत्तीत्यस्य = कार्याव्यवहितपूर्वक्षणावच्छेदेनेत्यर्थः, तस्याऽत्यन्ताभावे विशेषणत्वम् , अन्यथासिद्धिशून्यत्वमप्यधिकं पदं देयम् , तथाच अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं कारणस्य लक्षणम् । यथा—घटं प्रति दण्डः कारणम् , तत्र दण्डे अन्यथासिद्धिशून्यत्वमस्ति, अथच घटरूपकार्योत्पत्त्यव्यवहितपूर्वक्षणावच्छेदेन घटरूपकार्याधिकरणभूतलवृत्तिर्योऽत्यन्ताभावो न स दण्डाभावो भविष्यति दण्डं विना घटस्याऽनुत्पद्यमानत्वात् , किन्तु उदासीनपटाद्यभाव एव तदीयप्रतियोगित्वं पटे अप्रतियोगित्वमपि दण्डे इति लक्षणसमन्वयः ।

'कारण' वही कहलाता है, जो घट आदि कार्योंकी उत्पत्तिके पहले अवश्य रहे । [ जैसे—घट के प्रति दण्ड, चक्र, कुलाल आदि । ]

कार्यस्य किं लक्षणम् ?—

## कार्यं प्रागभावप्रतियोगि ॥

कार्यस्य किं लक्षणमित्याह—**कार्यमिति** । प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् । यस्याऽभावः स प्रतियोगी, इह घटो भविष्यतीतिप्रतीतिसिद्धोऽभावः प्राग-

भावस्तत्प्रतियोगित्वं घटादिकार्ये इति लक्षणसमन्वयः । नित्येषु 'इह आकाशं भविष्यती'ति प्रयोगो न भवत्येवेति न तत्राऽतिव्याप्तिः ।

'कार्य' वह कहलाता है जो पदार्थ प्रागभाव का प्रतियोगी हो, अर्थात् जिसके उत्पत्ति होनेकी सम्भावना हो । जैसे-घट-पट आदि ।

( घटादि कार्योत्पत्तिके पहले कपालादिको देखकर यहां घट होगा ऐसा ज्ञान होता है । इस ज्ञान का विषय जो अभाव है वही 'प्रागभाव' कहलाता है ) ।

कारणं कतिविधम् ?—

**कारणं त्रिविधं-समवाय्यसमवायिनिमित्तभेदात् ॥**

एतावत्पर्यन्तं कार्यकारणलक्षणे विचार्य इदानीं कारणभेदान्दर्शयति—**कारणं त्रिविधमिति** । समवायिकारणम्–असमवायिकारणम्–निमित्तकारणमितिभेदेन कारणं त्रिविधमित्यर्थः ।

कारण तीन प्रकारके हैं–समवायिकारण, असमवायिकारण, और निमित्तकारण इस भेद से ।

समवायिकारणस्य किं लक्षणम् ?

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा–तन्तवः पटस्य, पटश्च स्वगतरूपादेः ॥**

आद्यं समवायिकारणं लक्षयति—**यत्समवेतमिति** । यस्मिन् = द्रव्ये, समवेतम् = समवायाख्यसम्बन्धेन सम्बद्धं सत् कार्यमुत्पद्यते, तत्=यत्पदग्राह्यं, समवायिकारणमित्यर्थः । अस्मिन् शास्त्रे समवायिकारणं द्रव्यमेव भवतीति सिद्धान्तः । समवायिकारणमुदाहरति—**यथेति** । पटरूपकार्यं प्रति समवायिकारणं तन्तवः, घटं प्रति च कपाल. । यस्मिन्=तन्त्वादौ, समवायाख्यसम्बन्धेन सम्बद्धं सदेव पटादिकार्यमुत्पद्यते, पटो हि अवयवी, तन्तवश्चावयवाः, अवयवावयविनोश्च सम्बन्धस्समवाय इति अग्रे वक्ष्यमाणत्वात्समवेतत्वं सुस्पष्टमेव । समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नकारणत्वं समवायिकारणस्य लक्षणं बोध्यम् ।

जिस द्रव्यमें समवाय सम्बन्धसे कार्य उत्पन्न हो वह 'समवायिकारण' होता है । जैसे—कपड़ाका समवायिकारण सूत है । और कपड़ा भी अपने सफेद आदि रूप का समवायिकारण है । इसी तरह घटका समवायिकारण कपाल है ।

असमवायिकारणस्य किं लक्षणम् ?—

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम् । यथा—तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य॥**

असमवायिकारणस्य लक्षणमाह—**कार्येणेति** । पटादिरूपकार्येण सहैकस्मिन्नर्थे=तन्तुरूपस्थाने समवेतम्=समवायसम्बन्धेन सम्बद्धं यत्कारणं तन्तुसंयोगस्स एव पटं प्रति असमवायिकारणम् । द्वितीयन्तु कारणेन=असमवायिकारणकार्यस्य समवायिकारणेनेत्यर्थः, एवञ्च तन्तुरूपस्वरूपासमवायिकारणस्य यत्कार्यं पटरूपं तस्य समवायिकारणं पटस्तेन सहैकस्मिन्नर्थे=तन्तुरूपे स्थाने समवेतं यत्=तन्तुरूपं तत्पटरूपं प्रत्यसमवायिकारणमस्तीत्यर्थः । तदेवोदाहरति—**यथेति** । समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय–स्वसमवायिसमवेत्वान्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणस्य लक्षणम् । असमवायिकारणे गुणकर्मणी एव स्त ।

असमवायिकारण वह कहलाता है, जो कारण, कार्य या कारणके साथ एक ही अधिकरण में समवायसम्बन्धसे विद्यमान हो । कार्य के साथ का जैसे–अनेक तागों का संयोग वस्त्रके प्रति असमवायिकारण है । कारणके साथ का जसे–सूतका रूप वस्त्रके रूपके प्रति असमवायिकारण है ।

निमित्तकारणस्य किं लक्षणम् ?—

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमादिकं पटस्य ॥**

निमित्तकारणस्य लक्षणमाह—**तदुभयेति** । तत्पदं समवायिकारणासमवायिकारणपरम् तथाच समवाय्यसमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम् । उदाहरणमाह—**यथेति** । तुरी=‘ताना’, इति भाषायां प्रसिद्धः, वेमा=‘वाना’ इति पदवाच्य.,तानिसर्वाणि पटं प्रति निमित्तकारणानि भवन्तीति भावः ।

‘निमित्तकारण’ वह कहलाता है, जो समवायिकारण और असमवायिकारणसे भिन्न हो । जैसे–तुरी वेमा ( जुलाहेका ताना आद औजार ) कपड़ेका निमित्तकारण है । एवं घटके प्रति दण्ड, चक्र, कुलाल आदि निमित्तकारण है ।

करणस्य निष्कृष्टलक्षणं किम् ?—

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

उपसंहरति—**तदेतदिति** । असाधारणं कारणं करणमित्यत्र एतत्त्रिविधसमवायि-असमवायि-निमित्तकारणमध्ये यदसाधारणकारणम्, व्यापारवदिति पूरणीयम्, तदेव करण नान्यदित्यर्थः । कृतमत्र करणविचारेण प्रकृतमनुसराम इति तु हृद्गतमन्नंभट्टस्येत्यर्थः ।

समवायिकारण, असमवायिकारण और निमित्तकारणोंमें जो असाधारणकारण हो वही 'करण' कहाता है ।

प्रत्यक्षप्रमाणलक्षणं किम् ?—

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

'तत्करणमपि चतुर्विधमि'ति ग्रन्थेन विभक्तस्य प्रत्यक्षप्रमाणस्य प्रथमोपस्थितत्वादादौ तस्यैव लक्षणमाह—**तत्रेति** । प्रत्यक्षज्ञानम्–प्रत्यक्षप्रमा प्रत्यक्षयथार्थानुभवो वा, तस्य करणम् = व्यापारवदसाधारणकारणं तदेव प्रत्यक्षप्रमाणमित्यभिधीयते । तथाच प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणं वोध्यम् ।

प्रत्यक्ष ज्ञानका असाधारणकारण 'प्रत्यक्ष प्रमाण' ( नेत्र आदि इन्द्रियाँ ) है ।

प्रत्यक्षप्रमालक्षणं किम् कतिविधा च सा ?—

**इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । (ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ) । तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति ॥**

अथ का नाम प्रत्यक्षप्रमेत्याह—**इन्द्रियार्थेति** । इन्द्रियम् = चक्षुरादिकम्, अर्थः = विषयो घटादिस्तयोस्सन्निकर्षः = सम्बन्धः संयोगादिस्तज्जन्यं यज्ज्ञानं तदेव प्रत्यक्षं=प्रत्यक्षप्रमेति गीयते। प्रत्यक्षज्ञानोत्पत्तिक्रमश्चैवं वोध्य.–प्रथमं आत्मा मनसा संयुज्यते, ततो मन इन्द्रियेण ( चक्षुरादिना ), इन्द्रियश्चार्थेन ( घटादिना ) संयुज्यत इति परेणान्वय., ततो घटादीना प्रत्यक्षं भवति । अत्र प्रत्यक्षप्रमाणं ( इन्द्रियं ) करणम्, इन्द्रियार्थसन्निकर्षो व्यापारः, फलं प्रत्यक्षप्रमा, तथाच प्रत्यक्षप्रमाया इन्द्रियार्थसंयोगजन्यत्वमस्तीति लक्षणसमन्वयः । एवञ्च इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम् । अत्र ज्ञानत्वमात्रस्य लक्षणत्वे अनुमित्युपमित्यादिप्रमायामतिव्याप्तिरतः सत्यन्तम् । ज्ञानत्वपदानुपादाने सन्निकर्षध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वस्य पूर्वमुक्तत्वादत उभयोरुपादानमिति । **ज्ञानाकरणकमिति** । क्षेपकमिदं लक्षणम् । अथापि वालवोधायैतद्विविच्यते । ज्ञानं यत्र ज्ञाने करणं नास्ति तदेव प्रत्यक्षं = प्रत्यक्षप्रमे-

त्यर्थः, अनुमितौ व्याप्तिज्ञानस्य, उपमितौ सादृश्यज्ञानस्य, शाब्दे च पदज्ञानस्य करणत्वात् प्रत्यक्षप्रमायाञ्च इन्द्रियस्यैव करणत्वेन इतरव्यावृत्तिपुरस्सरं लक्षणसमन्वयो बोध्यः । मूलक्तलक्षणे जन्यत्वस्य प्रत्यक्षविशेषणत्वेन नित्यभूते ईश्वरप्रत्यक्षेऽव्याप्तिमाशङ्क्य कैश्चिदिदं क्षिप्तं लक्षणं ग्रन्थे, परन्तु न्यायदर्शनादिग्रन्थप्रामाण्यानुसारेण जन्यप्रत्यक्षस्यैवात्र लक्ष्यतया तादृशलक्षणस्य नेश्वरेऽव्याप्तिदोषशङ्का इति व्यर्थमिदं लक्षणमिति सुधियो विदाकुर्वन्तु । प्रत्यक्षप्रमाया भेदानाह—**तद्द्विविधमिति** । निर्विकल्पक-सविकल्पकभेदेन प्रत्यक्षप्रमा द्विधेत्यर्थः ।

प्रत्यक्ष वही कहलाता है, जो ज्ञान नेत्र आदि इन्द्रियोंके और घट-पटादि विषयोंके सन्निकर्ष ( सम्बन्ध ) से होता हो ।

[ जिस ज्ञानमें ज्ञान करण न हो वह ज्ञान प्रत्यक्षज्ञान ( प्रत्यक्षप्रमा ) है । ]

वह प्रत्यक्ष दो तरहका है—निर्विकल्पक और सविकल्पक ।

निर्विकल्पकस्य लक्षणं किम् ?—

**(१)(तत्र) निष्प्रकारकं ज्ञानं निर्विकल्पकम् (यथा—किञ्चिदिदमिति ) ॥**

निर्विकल्पकस्य लक्षणमाह—**तत्र निष्प्रकारकमिति** । यत्र प्रत्यक्षे (ज्ञाने) प्रकारस्य, विशेष्यस्य तयोः सम्बन्धस्य च भानं न भवति तन्निर्विकल्पकमित्यर्थः । प्रकारतासंसर्गताविशेष्यताशून्यत्वे सति ज्ञानत्व निर्विकल्पकस्य लक्षणं बोध्यम् । उदाहरति—**यथेति** । 'किञ्चित्' इत्यत्र विशेष्यतादीनामभावाल्लक्षणसमन्वयः ।

जिस ज्ञानमें विशेष्य, विशेषण और सम्बन्ध का भान न हो, अर्थात् 'घटघटत्वे' आदि स्थलोंमें कौन विशेष्य है, कौन विशेषण है और विशेषण विशेष्यका कौन सा सम्बन्ध है ऐसा ज्ञान न ही होता, अतः वह 'निर्विकल्पक' ज्ञान कहलाता है ।

सविकल्पकस्य लक्षणं किम् ?—

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा—डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति ॥**

सविकल्पकस्य लक्षणमाह—**सप्रकारकमिति** । यत्र प्रकारतादिकं ज्ञाने भासते तत्सविकल्पकं बोध्यम् , प्रकारतानिरूपकत्वे सति ज्ञानत्वं सविकल्पकस्य लक्ष-

---

( १ ) ( ) एतच्चिह्नान्तर्गतस्सटीकमूले म० मु० पु० नास्ति ।

णम् । उदाहरति—यथेति । अत्र डित्थत्व-श्यामत्व-ब्राह्मणत्वादिप्रकारता प्रत्यक्षे भासत इति तस्य सविकल्पकत्वम् ।

जिस ज्ञानमें विशेष्य विशेषण और उसके सम्बन्धका ज्ञान हो वह 'सविकल्पक' ज्ञान कहलाता है । यथा-यह डित्थ ( लकड़ीका हाथी ) है, यह ब्राह्मण है, यह श्याम है इस तरहका ज्ञान 'सविकल्पक' है ।

सन्निकर्षः कतिविधः कश्च सः ?—

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ॥**

प्रत्यक्षं षड्विधम् , तत्र पञ्चविधं बहिरिन्द्रियम् (घ्राण रसन-त्वग्-चक्षु-श्रोत्रजम्), एकविधञ्च आभ्यन्तरं मनोजन्यं मानसमिति, इदं हि प्रत्यक्षं इन्द्रियार्थसन्निकर्षजन्यमित्युक्तमेव तत्र के ते सन्निकर्षा इत्याशङ्कायामाह—प्रत्यक्षेति । प्रत्यक्षज्ञानहेतुः=षड्विधप्रत्यक्षज्ञानकारणीभूतस्सन्निकर्षः षड्विध इत्यर्थः । षाड्विध्यं दर्शयति—संयोग इति ।

विषय ( घट पट आदि ) और चक्षु आदि इन्द्रियोंका जो सन्निकर्ष ( सम्बन्ध ) है, वही प्रत्यक्षज्ञानका ( प्रत्यक्षप्रमितीका ) कारण है ।

यह सन्निकर्ष (सम्बन्ध) छे प्रकारका है-१ संयोग, २ संयुक्त समवाय, ३ संयुक्तसमवेतसमवाय, ४ समवाय, ५ समवेतसमवाय और ६ विशेषणविशेष्यभाव ।

घट(द्रव्य)प्रत्यक्षे कः सन्निकर्षः ?—

**चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ॥**

चक्षुषेति । घटस्य ( द्रव्यस्य ) चाक्षुषप्रत्यक्षं प्रति संयोगः कारणम् ।

नेत्रसे घट-पटादिका जो प्रत्यक्षज्ञान होता है उसमें 'संयोग, सन्निकर्ष' है ।

घट(द्रव्य)रूपगुणप्रत्यक्षे कः सन्निकर्षः ?—

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात् ॥**

घटरूपेति । द्रव्यसमवेतस्य रूपादेश्चाक्षुषं प्रति संयुक्तसमवायः कारणम् । यथा—चक्षुःसंयुक्तो घटस्तत्र समवेतत्वं घटरूपेऽस्तीति ।

घट, पट, और वस्त्र आदिके लाल, पीले, काले आदि रंगोंके नेत्रसे प्रत्यक्ष ज्ञान

में 'संयुक्त समवाय' सन्निकर्ष होता है, क्यों कि-नेत्रसे संयुक्त घट-पट आदि पदार्थों में लाल पीला आदि रंग समवायसम्बन्धसे रहता है।

रूपत्व (गुणगतजाति) प्रत्यक्षे कः सन्निकर्षः ?—

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात् ॥**

रूपत्वेति । द्रव्यसमवेतसमवेतस्य रूपत्वादेश्चाक्षुषं प्रति संयुक्तसमवेतसमवायः कारणम्। यथा—चक्षुःसंयुक्तो घटस्तत्समवेत रूपं तत्समवेतत्वं रूपत्वेऽस्तीति।

घट आदिकों के रूपमें रहने वाली रूपत्वजातिका नेत्रसे जो प्रत्यक्ष होता है, उस प्रत्यक्षमें 'संयुक्त-समवेत-समवाय' सन्निकर्ष है। क्यों कि-नेत्रसे संयुक्त हुआ घट, उसमें समवेत हुआ रूप, उसमें भी रूपत्वका समवाय है।

शब्दप्रत्यक्षे कः सन्निकर्षः ?—

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, कर्णविवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात् ॥**

श्रोत्रेणेति । शब्दप्रत्यक्षं प्रति समवायः कारणम् ।

श्रोत्र (कान) से शब्दके प्रत्यक्ष करनेमें 'समवाय' सन्निकर्ष है, क्यों कि-कानके विवर ( छिद्र ) में जो आकाश है वही श्रोत्रेन्द्रिय है, और शब्द आकाशका गुण है गुण और गुणीका सम्बन्ध समवाय होता है। इसलिये कानका शब्दसे समवाय सन्निकर्ष ( सम्बन्ध ) है।

शब्दत्वसाक्षात्कारे कः सन्निकर्षः ?—

**शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥**

शब्दत्वेति । शब्दसमवेतशब्दत्वादिप्रत्यक्षं प्रति समवेतसमवाय कारणम्।

कर्णेन्द्रियसे शब्दत्वजातिके प्रत्यक्षज्ञान करनेमें 'समवेत-समवाय' सन्निकर्ष है। क्योंकि-श्रोत्रमें, समवायसम्बन्ध से रहने वाला, शब्द समवेत है, उसमें शब्दत्वजाति समवायसम्बन्धसे रहती है।

अभावप्रत्यक्षे कः सन्निकर्षः ?—

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥**

**अभावप्रत्यक्षेति । विशेषणेति ।** विशेषणभावो विशेष्यभावश्चेति सम्बन्धद्वयमित्यर्थः, न तु वैयाकरणवत्तादृशोऽखण्ड एकस्सम्बन्ध इति ध्येयम् ।

'घटाभाव, पटाभाव, मठाभाव' आदि अभावोंका नेत्र आदि इन्द्रियोंसे प्रत्यक्ष करनेमें 'विशेषणविशेष्यभाव' सन्निकर्ष है । क्यों कि-'घटाभाववद्भूतलम्' 'पटाभाववद्भूतलम्' इत्यादि स्थलोंमें नेत्रसे संयुक्त भूतलमें घटाभाव पटाभाव आदि विशेषण हैं और भूतल विशेष्य है । "भूतले घटाभावः" ( भूतलनिरूपितवृत्तितावान् घटाभावः ) यहां पर नेत्रसे संयुक्त भूतल है, वह विशेषण है और घटाभाव विशेष्य है ।

प्रत्यक्षप्रमाणस्य निष्कृष्टं लक्षणं किम् ?—

**एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षं तत्करणमिन्द्रियम्, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।**

**इति प्रत्यक्षपरिच्छेदः ।**

---

उपसंहरति—**एवमिति ।** सिद्धान्तमाह—**तस्मादिति ।**

इति प्रत्यक्षखण्डीयकमला समाप्ता ।

इस प्रकार-संयोग, संयुक्त समवाय आदि छै सन्निकर्षों से जो ज्ञान होता है वही 'प्रत्यक्ष' कहा जाता है । इस तरह का जो ज्ञान होता है उसका कारण नेत्र आदि इन्द्रियां है, इसलिये इन्द्रियां ही प्रत्यक्षप्रमाण हैं ।

इस तरह इन्दुमती का प्रत्यक्षखण्ड समाप्त हुआ ।

---

## अथाऽनुमानखण्डम् ।

अनुमानस्य किं लक्षणम् ?—

**अनुमितिकरणमनुमानम् ॥**

### अथाऽनुमाननिरूपणम् ।

अत्रेदं बोध्यम्—चतुर्षु प्रमाकरणेषु प्रत्यक्षप्रमाकरणस्य लक्षणादिप्रपञ्च एतावत्पर्यन्तं निरूपितः, इदानीं द्वितीयस्यानुमितिप्रमाकरणस्य लक्षणादिकं विचार्यते—**अनुमितिकरणमित्यादिना ।**

अनुमित्यात्मकप्रमोत्पत्तिक्रमश्चैवम्—मनुजः स्वगृहे प्रतिदिनं पाकशालायां धूमं 'वह्निं सहचरितं' दृष्ट्वा यत्र यत्र धूमस्तत्र तत्राऽग्निरित्यवधारयति, इदमेव

व्याप्तिज्ञानम् , तत. परं कदाचित्प्रवासार्थं देशान्तरे गते सति पाकसाधनेच्छया वह्निमितस्ततो मार्गयन्पुरःस्थिते पर्वतेऽविच्छिन्नमूला धूमरेखा स पश्यति । धूम-दर्शनसमनन्तरमेव तस्य पाकशालायामनुभूताया. व्याप्ते स्मरण भवति, तदा-कारश्च—'वह्निव्याप्यो धूम ' इति । तदनन्तर 'वह्निव्याप्यधूमवान् पर्वत.' इत्यन्य-देकं परामर्शाख्यं ज्ञान जायते । तदनन्तरमनुमिति 'पर्वतो वह्निमान्' इति । ततः पाकाय प्रवर्तत इत्यन्यदेतत् ।

अत्र पर्वते यद्व्याप्ते. स्मरणात्मक ज्ञानं तदेवानुमानं प्रकृते करणत्वेन विव-क्षितम् । परामर्शश्च व्यापार । फलमनुमिति । परामर्शरूपव्यापारवत्त्वस्य–असाधा-रणकारणत्वस्य चाऽनुमाने सत्त्वात्तस्य करणत्वं सुस्पष्टमेव । तदेवाऽह—**अनुमि-तीति** । अनुमितिकरणत्वमनुमानस्य लक्षणमित्यर्थ. ।

अनुमितिका करण अनुमान कहलाता है ।

अनुमितिः का ?—

## परामर्शजन्यं ज्ञानमनुमितिः ॥

अनुमितिलक्षणज्ञानं विना तत्करणत्वमपि दुर्ग्रहमतोऽनुमितिलक्षणमाह—**परा-मर्शेति** । परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम् । अनुमितिर्हि परामर्शेणो-त्पद्यते तस्या ज्ञानत्वञ्चास्तीति लक्षणसमन्वय । अत्र ज्ञानत्वमात्रस्य लक्षणत्वे प्रत्यक्षप्रमादावतिव्याप्तिरतः सत्यन्तम् । ज्ञानत्वपदानुपादाने परामर्शध्वंसेऽतिव्याप्ति , ध्वंसं प्रति प्रतियोगिन· कारणत्वादत उभयोरुपादानम् ।

परामर्शस्वरूप ज्ञानसे जन्य (उत्पन्न) जो ज्ञान होता है वह अनुमिति कहलाता है ।

परामर्शस्य कि स्वरूपम् ?—

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा–'वह्निव्याप्य-धूमवानयं पर्वत' इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमा-निति ज्ञानमनुमितिः ।**

ननु परामर्शस्य किं लक्षणमित्याह—**व्याप्तीति** । व्याप्तिविशिष्टञ्च तत् पक्ष-धर्मताज्ञानञ्च व्याप्तिविशिष्टपक्षधर्मताज्ञानं तत् परामर्श , विशिष्टपदस्य प्रकारकत्वमर्थ., कर्मधारये च समस्यमानपदार्थयोरभेदेनान्वयो व्युत्पन्न । तथाच नीलो घट इत्यत्र नीलाऽभिन्नो घट इतिवदत्रापि व्याप्तिप्रकारकाभिन्नं यत्पक्षधर्मताज्ञान स परामर्श इत्यर्थ· । व्याप्तिः = हेतुसाध्ययो. सम्बन्धविशेष , स च हेतुनिष्ट । 'पर्वतो वह्नि-

मान् धूमादि'त्यत्र पर्वतः पक्षः, वह्निः साध्यम् , धूमादिति हेतुः, 'यत्र यत्र धूमस्तत्र तत्राऽग्निरि'ति व्याप्त्याकारः, सा हि धूमे वर्तते, यद्यत्र वर्तते तत्तत्र प्रकारः, एवञ्च धूमे व्याप्तिः प्रकारभूता, धूमश्च विशेष्यः । एवं पक्षधर्मताज्ञानम्='धूमवान् पर्वत'' इत्याकारकम् , तत्र पर्वतो विशेष्यः, धूमश्च प्रकारः । व्याप्ति ( वह्निव्याप्यो-धूमः ) ज्ञाने धूमस्य विशेष्यत्वं, पक्षधर्मताज्ञाने च तस्य प्रकारत्वमिति प्रकारता-विशेष्यतोभयं धूमे वर्तते, तथाच पर्वते मनुजस्य पक्षधर्मताज्ञानं प्रत्यक्षरूपं तत्-अथच स्मरणात्मकं यद्व्याप्तिज्ञानं उभयञ्चैतत् विशेष्यविशेषणभावापन्नं विधाय परामर्शाख्यं ज्ञानान्तरं भवति ।

एतदुक्तं भवति—परामर्शाकारो हि 'वह्निव्याप्यधूमवान्पर्वतः' इति । व्याप्यो नाम=व्याप्त्याश्रयः, अत्र मुख्यो विशेष्यः पर्वतस्तत्र धूमः प्रकारः धूमे च व्याप्तिः । इदं हि ज्ञानं 'वह्निव्याप्यो धूमः, धूमवान् पर्वतः' इति ज्ञानद्वयाज्जायते । तथाच व्याप्तिनिष्ठप्रकारतानिरूपिता या धूमनिष्ठा विशेष्यता तदधिकरणवृत्तिर्या प्रकारता तन्निरूपिता या पर्वतनिष्ठा विशेष्यता तच्छालिज्ञानमित्यर्थः । एवञ्च व्याप्तिनिष्ठ-प्रकारतानिरूपितहेतुनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितपक्षनिष्ठविशेष्यता-शालिज्ञानत्वं परामर्शस्य लक्षणम् । परामर्शस्वरूपमाह—**यथेति** । अनुमितेः परा-मर्शजन्यत्वं सङ्गमयति—**तज्जन्यमिति** ।

वन्हि की जो व्याप्ति ( सम्बन्ध ), उससे विशिष्ट जो धूम, उसका जो पर्वत में वशिष्टयज्ञान अर्थात् 'व्याप्तिविशिष्टहेतु पर्वत में है' ऐसा जो ज्ञान उसीका नाम परामर्श है। उस परामर्श का आकार 'वन्हिव्याप्यधूमवानयं पर्वतः' ( वन्हिव्याप्तिविशिष्ट धूआँ वाला यह पर्वत है) यह है । और इस परामर्श से उत्पन्न 'पर्वत अग्निमान् है' यह ज्ञान अनुमिति है ।

व्याप्तिः का ?—

## यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः ॥

ननु व्याप्तेः किं लक्षणमित्याह—**यत्र यत्रेति** । 'यत्र यत्र धूमस्तत्र तत्राऽग्निरि'ति व्याप्तेराकारो न तु लक्षणम् । लक्षणन्तु—**साहचर्येति** । सहचरस्य भावस्साहचर्यम्=सामानाधिकरण्यम् , निपूर्वकस्य यम्धातोर्व्यापकत्वमर्थः, तथाच व्यापकसामानाधिकरण्यं व्याप्तेर्लक्षणम् । व्यापकत्वञ्च—तदधिकरणवृत्त्यत्यन्ता-भावाऽप्रतियोगित्वम् , तत्पदम्=हेतुपरम् , अप्रतियोगित्वञ्च साध्ये बोध्यम् , एवञ्च हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः । पर्वतो

वह्निमान् धूमादित्यत्र हेतुर्धूमस्तदधिकरणं पर्वतादिस्तत्र वर्तमानोऽत्यन्ताभावो न वह्न्यभावः, अपि तु घटाभाव एव तत्प्रतियोगी घट , अप्रतियोगि यत्साध्यं वह्निस्तत्सामाधिकरण्यम् = तदधिकरणं = वह्न्यधिकरणं पर्वतादिस्तद्वृत्तित्वं धूमे इति लक्षणसमन्वयः ।

अत्रेदमवधेयम्—हेतुर्हि द्विविध.,—सद्धेतुरसद्धेतुरिति भेदात् । तत्र व्याप्तिलक्षणस्य सद्धेतुर्लक्ष्यः, असद्धेतुश्चालक्ष्य इति तत्र लक्षणगमनं नेष्टम् । सद्धेतुत्वं नाम =विपक्षावृत्तित्वम् । विपक्षवृत्तित्वमसद्धेतुत्वम् । विपक्ष =निश्चितसाध्याभाववान् , पर्वतो वह्निमान् धूमादित्यत्र धूमहेतुस्सद्धेतु । अयोगोलकं धूमवत् वह्नेरित्यत्र वह्निहेतुरसद्धेतु', धूमभाववति अयोगोलके हेतोर्वर्तमानत्वात् । न च तत्र व्याप्तिलक्षणं सङ्गच्छते, तथाहि—अत्र हेतुर्वह्निस्तदधिकरणं अयोगोलकं तत्र वर्तमानो योऽभावो धूमाभावस्तत्प्रतियोगी एव धूम इति नाप्रतियोगित्वं धूमरूपसाध्यस्येति संक्षेप·(१) ।

**नियम से ( तीनों काल में ) दोनों का साथ में रहना इसे व्याप्ती कहते है । उस व्याप्ती का आकार 'यत्र यत्र धूमस्तत्र तत्राग्निः' ( जिस २ स्थान में धूआं है उस २ स्थान में निश्चय ही वन्ही है ) यह है ।**

**[ व्याप्ती एक सम्बन्ध है, जो कि साध्य और हेतू का होता है । वह हेतू में रहता है और साध्य से आता है अर्थात् साध्यनिरूपित और हेतुनिष्ठ नियमेन ( व्यापक ) सामानाधिकरण्य यही व्याप्ति पदार्थ है । ]**

**पक्षधर्मतायाः किं लक्षणम् ?—**

## व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥

---

( १ ) इदं हि व्याप्तेः सिद्धान्तलक्षणम् । पूर्वपक्षलक्षणन्तु—अव्यभिचरितत्वम् । तद्धि, साध्याभाववदवृत्तित्वम् , पर्वतो वह्निमान् धूमादित्यत्र लक्षणसमन्वयश्चैवम्–अत्र साध्यं वह्निः, साध्याभावो वह्न्यभावस्तदधिकरणं ह्रदस्तद्वृत्तित्वं मीनशैवालादौ अवृत्तित्वं धूमहेतौ वर्तत इति । असद्धेतौ धूमवान् वह्नेरित्यत्र साध्याभावो धूमाभावस्तदधिकरणं यथा ह्रदस्तथाऽयोगोलकोऽपि तद्वृत्तित्वमेव वह्निहेताविति नातिव्याप्तिः ।

अत्र 'इदं वाच्यं ज्ञेयत्वादि'त्यादि केवलान्वयिसद्धेतौ साध्याभावस्य=वाच्यत्वाभावस्याधिकरणाप्रसिद्ध्यास्य व्याप्तिलक्षणस्याव्याप्तिमाशङ्कैयव सिद्धान्तलक्षणावतार इति ध्येयम् ।

पक्षधर्मता केत्याशङ्कायामाह—**व्याप्यस्येति** । व्याप्यस्य=व्याप्त्याश्रयस्य हेतोर्धूमादेः, पक्षवृत्तित्वम् = पर्वतादिवृत्तित्वं सैव पक्षधर्मतेत्यर्थः ।

व्याप्य ( व्याप्ति विशिष्ट धूम आदि ) का पर्वत आदि पक्षमें रहना इसे 'पक्ष-धर्मता' कहते हैं ।

अनुमानं कतिविधम् ?—

**अनुमानं द्विविधं—स्वार्थं परार्थं च ॥**

अनुमानं विभजते—**अनुमानं द्विविधमिति** । द्वैविध्यं दर्शयति—**स्वार्थं परार्थञ्चेति** ।

अनुमितिकरणरूप अनुमान दो तरहका है—स्वार्थ-अनुमान और परार्थ-अनुमान ।

किं नाम स्वार्थानुमानम् ?—

**स्वार्थं स्वानुमितिहेतुः, तथाहि—स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वत-समीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति—'यत्र यत्र धूमस्तत्र तत्राग्निः' इति । तदनन्तरं वह्निव्याप्य-धूमवानयं पर्वत इति ज्ञानमुत्पद्यते, अयमेव लिङ्गपरामर्श इत्यु-च्यते । तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते । तदे-तत्स्वार्थानुमानम् ।**

तत्र स्वार्थानुमानस्य लक्षणमाह—**स्वार्थेति** । न्यायाप्रयोज्यानुमानत्वं स्वार्थानुमानस्य लक्षणम् । स्वार्थानुमितौ न्यायप्रयोगस्यानावश्यकत्वाल्लक्षण-सङ्गतिः । अनुमानस्याऽनुमितिकरणत्वम्, अनुमितेश्चाऽनुमानजन्यत्वं स्वयं विवृणोति—**तथाहीति** । इदन्तु अनुमानलक्षणावसरे उक्तप्रायमेव । **भूयोदर्श-नेनेति** । भूयोदर्शनमेव न व्याप्त्यनुभवं प्रति प्रयोजकं व्यभिचारशङ्कानुत्पत्तौ सकृद्-दर्शनेनापि तत्सम्भवात् । व्याप्तिं गृहीत्वा = व्याप्तिं प्रत्यक्षेणानुभूयेत्यर्थ । सन्दि-हानः=सन्देहं कुर्वाण पुरुष । **अयमेवेति** । इदंशब्दः पूर्वपरामर्शकः । उपसंह-रति—**तदेतदिति** । स्वप्रतिपत्तिहेतुत्वादस्य स्वार्थानुमानत्वमिति भाव. ।

अनुमान करनेवालेको स्वयं जिस अनुमानसे अनुमिति हो वह 'स्वार्थ-अनुमान'

कहलाता है । यथा-कोई मनुष्य बार-बार महानस ( रसोई का घर ) आदिमें धूआं और आग को एक साथ रहते देख कर 'जहां धूआं रहता है वहां आग निश्चय रहती है' इस तरहसे व्याप्तिका निश्चय कर बादमें पर्वतके समीप जाकर इस पर्वतमें आग है या नहीं इस तरहका सन्देह करता है। फिर तुरत उस पर्वतमें धूआंको देखकर 'जहां धूआं रहता है वहां आग निश्चय ही रहती है' इस व्याप्ति का स्मरण करता है इसके बाद उसे 'वह्निव्याप्य धूमवाला यह पर्वत है' ऐसा ज्ञान पैदा होता है। यही ज्ञान 'लिङ्गपरामर्श' है। इस ज्ञानसे उस मनुष्यको 'पर्वतमें आग है' यह ज्ञान पैदा होता है। यही स्वार्थानुमिति कहलाती है। अपने अनुमिती का साधक होने से यह स्वार्थानुमान हुआ।

परार्थानुमानस्य किं स्वरूपम् ?—

**यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्। यथा पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान्स स वह्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथेति। अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते।**

परार्थानुमानस्य लक्षणमाह—**यत्त्विति**। न्यायप्रयोज्यानुमानत्वं परार्थानुमानस्य लक्षणम्। न्यायत्वं नाम=प्रतिज्ञादि-अवयवपञ्चकसमुदायत्वम्, परार्थानुमाने प्रतिज्ञादिपञ्चवाक्यानां प्रयोगो भवतीति लक्षणसमन्वय। यत्तु=कश्चित्पुरुष, स्वयम्, धूमात् = धूमहेतुना, अग्निमनुमाय=वह्नयनुमितिं कृत्वा, परम्=स्वेतरं पर्वते वह्निमजानानं प्रति, बोधयितुम् = अनुमापयितुमित्यर्थः। पञ्चावयववाक्यप्रयोगमाह—**यथेति**। महानसम्=पाकशालेत्यर्थः, तत्र वह्निधूमयोः सामानाधिकरण्यस्य प्रायो दर्शनादिति भाव। तथा = वह्निव्याप्यधूमवान्, अयम् = पर्वतादिः। तस्मात् = वह्निव्याप्यधूमवत्त्वात्, तथा = पर्वतो वह्निमानित्यर्थ। अनेन = पञ्चावयववाक्येन, प्रतिपादितात् = प्रयोज्यात्, लिङ्गात् = लिङ्गपरामर्शात्, परोऽपि= पर्वते वह्निमजानानोपि, अग्निं प्रतिपद्यते = वह्निमनुमिनोतीत्यर्थः। प्रथमं पञ्चावयववाक्यप्रयोगस्ततस्तज्जन्यो बोध ( शाब्दबोध ) स्ततो लिङ्गपरामर्शस्ततोऽनुमितिरिति परार्थानुमानक्रमो ज्ञेय।

स्वयं धूम हेतु से अग्नि का अनुमान कर के दूसरे व्यक्ति को बोध कराने के लिये "पर्वतो वह्निमान्" "धूमात्" इत्यादि, पञ्चावयव वाक्यका जो प्रयोग किया जाता है,

वह 'परार्थानुमान' है। पांच वाक्य यथा-१ पर्वतमें आग है। २ धूम के रहने से। ३ जहां जहां धूम रहता है वहां वहां अग्नि निश्चय रहती है, जैसे—रसोई पकाने वाले घरमें। ४ वैसे ही इस पर्वतमें भी वह्निव्याप्यधूम दिखलाई पड़ता है। ५ इस लिये इस पर्वत में भी आग निश्चय रहती है। इस प्रकार पञ्च-अवयव वाक्य से कहे हुए लिङ्ग से दूसरे मनुष्य भी पर्वतमें अग्निका अनुमान कर लेते हैं।

पञ्चावयवाः के ?—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वन्हिमानिति प्रतिज्ञा। धूमवत्त्वादिति हेतुः। यो यो धूमवान् स स वह्निमानित्युदाहरणम्। तथा चायमित्युपनयः। तस्मात्तथेति निगमनम्।**

अथ के पञ्चावयवा इत्याशङ्कायामाह—**प्रतिज्ञेति।** प्रतिज्ञा-हेतुः-उदाहरणम्-उपनयः-निगमनञ्चेति भेदेन पञ्च न्यायावयवा इत्यर्थः। प्रतिज्ञाद्यन्यतमत्वं अवयवस्य लक्षणम्। वहुषु कस्यचिदप्येकस्य सङ्ग्रहायान्यतमपदप्रयोग., द्वयोर्मध्ये एकस्य सङ्ग्रहायान्यतरपदप्रयोग इति ध्येयम्। साध्यविशिष्टपक्षबोधकवाक्यं प्रतिज्ञा। पञ्चम्यन्तं तृतीयान्तं वा वाक्यं हेतु। व्याप्तिबोधकं दृष्टान्तवाक्यमुदाहरणम्। व्याप्तिविशिष्टस्य हेतोः पक्षधर्मताबोधकं वाक्यमुपनय.। पक्षे साध्यस्या(१)बाधितत्वप्रतिपादकं वाक्यं निगमनमिति। इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन्विशिष्य दर्शयति—**पर्वतो वह्निमानित्यादिना।**

अवयव पांच तरह के होते हैं-प्रतिज्ञा, हेतु, उदाहरण, उपनय और निगमन। प्रतिज्ञा, जसे-"पर्वतो वह्निमान्" (पर्वत में आग है)। हेतु, जैसे-धूमात्" (क्योंकि पर्वतमें धूम है)। उदाहरण जैसे-"यो यो धूमवान् स स वह्निमान् यथा महानसम्" (जहां जहां धूम है वहां वहां आग रहती है जैसे-पाकशालामें)। उपनय, जसे-"तथा चायम्" यह (पवत) भी रसोईघरके समान वह्निव्याप्यधूमवाला है। निगमन, जसे-"तस्मात्तथा" (अतः यह भी वह्निमान् है)।

---

(१) प्रतिज्ञावाक्येनैव पक्षे साध्यवत्त्वस्य बोधनात् निगमनवाक्येनापि तादृशार्थबोधने पौनरुक्त्यं स्यादतो निगमनेन-अबाधितत्वं हेतौ बोध्यते, तेन च परामर्शो दार्ढ्यता इति तत्त्वम्।

स्वार्थानुमितिपरार्थानुमित्योः किं करणम् ?—

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्।**

अथ स्वार्थानुमितिपरार्थानुमित्योः किं करणमित्याशङ्कायामाह—**स्वार्थेति**। स्वार्थानुमितौ परार्थानुमितौ च, लिङ्गपरामर्श =परामर्श एव ('वह्निव्याप्यधूमवान् पर्वत' इत्याकारक) करणम्। एवकारेण ज्ञायमानलिङ्गस्य करणत्वव्यवच्छेदः। उपसंहरति—**तस्मादिति**। इदं हि नवीनमतानुसारेण, एतेषां मते असाधारणकारणत्वमेव करणत्वम् न तु व्यापारवत्त्वेनापि विशिष्टम्। तथाचैतन्मते परामर्शस्य करणत्वं बोध्यम्।

स्वार्थानुमिति और परार्थानुमिति इन दोनों का असाधारणकारणरूप करण लिङ्गपरामर्शही ( 'वह्निव्याप्यधूमवान् पर्वतः' ऐसा ज्ञान ) है। अतः लिङ्गपरामर्श ही अनुमानप्रमाण है।

लिङ्गं कतिविधं, किञ्चान्वयव्यतिरेकिलक्षणम् ?—

**लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि—केवलान्वयि—केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा—वन्हौ साध्ये धूमवत्त्वम्। यत्र धूमस्तत्राग्निर्यथा—महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा-ह्रद इति व्यतिरेकव्याप्तिः।**

लिङ्गपरामर्श इत्यत्र लिङ्गम्=हेतु., स कतिविध इत्याशंकायामाह—**लिङ्गमिति**। त्रैविध्यं दर्शयति—**अन्वयेति**। अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि-चेतिभेदेन लिङ्गं त्रिविधमित्यर्थः।

अन्वयव्यतिरेकिहेतोर्लक्षणमाह—**अन्वयेनेति**। अन्वयव्याप्तिमत्त्वे सति व्यतिरेकव्याप्तिमद्हेतुत्वं अन्वयव्यतिरेकिणो लक्षणम्। व्याप्तिर्हि द्विविधा—अन्वय-व्याप्तिर्व्यतिरेकव्याप्तिश्चेति भेदात्। अन्वयव्याप्ति. =हेतुसाध्ययोर्व्याप्तिः व्यापक-सामानाधिकरण्यरूपा। व्यतिरेकः = अभाव. साध्याभावो हेत्वभावश्चेति यावत्, तयोर्व्याप्तिरित्यर्थः। व्यतिरेकव्याप्तिस्तु—साध्याभावव्यापकीभूताभावप्रति-योगित्वम्। यथा—'पर्वतो वन्हिमान् धूमादि'त्यत्र साध्याभावो =वन्ह्यभावस्त-द्व्यापकीभूतो योऽभाव. हेत्वभावः =धूमाभावस्तत्प्रतियोगित्वं धूमे इति धूमस्य

व्यतिरेकव्याप्तिमत्त्वमस्ति, अथच व्यापकसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वमपि तत्रास्त्येवेति लक्षणसमन्वयः । तदेवोपपादयति—**यथेति** ।

लिङ्ग तीन प्रकार का है-अन्वयव्यतिरेकि, केवलान्वयि और केवलव्यतिरेकि इस भेदसे । 'अन्वयव्यतिरेकि' वह कहलाता है जिस लिङ्ग (हेतु) में अन्वय-व्याप्ति और व्यतिरेक-व्याप्ति ये दोनों व्याप्ति हों । जैसे-वह्निके अनुमानमें धूम हेतु अन्वयव्यतिरेकि है । 'जहां धूम है वहां आग है' जैसे-रसोई के घर में; यह अन्वय व्याप्ति है । 'जहां आग नहीं है, वहां धूम भी नहीं है' जैसे-तालावमें यह 'व्यतिरेकव्याप्ति' ( अभाव की व्याप्ति ) है ।

केवलान्वयिनः किं लक्षणम् ?—

**अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा—घटोऽभिधेयः प्रमेयत्वात्पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादाभिधेयत्वाच्च ।**

केवलान्वयिहेतोर्लक्षणमाह—**अन्वयमात्रेति** । अन्वयमात्रव्याप्तिकत्वं केवलान्वयिनो लक्षणम् । उदाहरणमाह—**यथेति** । अत्र 'घटः' इति पक्षः, 'अभिधेयः' इति साध्यम् , अभिधा=ईश्वरेच्छा तद्विषयत्वमभिधेयत्वम् , 'प्रमेयत्वात्' इति हेतुः 'पटवत्' इति दृष्टान्तः । लक्षणं सङ्गमयति—**अत्रेति** । व्यतिरेकव्याप्तिः=अभिधेयत्वाभावव्यापकीभूताभावप्रतियोगित्वरूपा, व्यतिरेकदृष्टान्ताभावाद् व्यतिरेकव्याप्तिरपि दुर्ग्रहेति भावः । तत्र हेतुमाह—**सर्वस्यापीति** । वस्तुमात्रस्येत्यर्थः । केवलान्वयित्वं नाम = सर्वत्र विद्यमानत्वम् । वस्तुतस्तु—केवलान्वयिसाध्यकत्वमेव हेतोः केवलान्वयित्वम्, तथाच घटोऽभिधेयो द्रव्यत्वादित्यादौ द्रव्यत्वादेरपि केवलान्वयित्वं निर्वहतीति ध्येयम् ।

जिस लिङ्ग ( हेतु ) में केवल अन्वयव्याप्ति हो वह केवलान्वयी है । जैसे—"घटोऽभिधेयः प्रमेयत्वात् पटवत" (घट अभिधेय है, क्योंकि इसमें प्रमेयत्व है)। यहां प्रमेयत्व हेतु केवलान्वयी है, यतः प्रमेयत्व और अभिधेयत्व सभी पदार्थोंमें है और उसका अभाव कहीं नहीं है अतः उसके अभाव की व्याप्ती नही हो सकती ।

केवलव्यतिरेकिणः कि लक्षणम् ?—

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा—पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद्गन्धवत्,**

**यथा-जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ।**

केवलव्यतिरेकिनः हेतोर्लक्षणमाह—**व्यतिरेकमात्रेति** । मात्रपदेन-अन्वय-व्याप्तिमत्त्वस्य व्यवच्छेदः । तथाच अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्ति-मत्त्व केवलव्यतिरेकिणो लक्षणम् । उदाहरणमाह—**यथेति** । पृथिवीति पक्ष., इतरभेद·=पृथिवीतरजलाद्यष्टभेद साध्यम्(१), गन्धवत्त्वादिति हेतुः । अयं हेतु· केवलव्यतिरेकी, अत्र यद् गन्धवत्तदितरभेदवदिति अन्वयदृष्टान्ताभावात् गन्ध-व्यापकइतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात् , किन्तु 'यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभाव.' यथा—जलादिकमितिव्यतिरेकदृष्टान्ते जलादौ इतरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते । इममेवाशयं हृदि-निधायाह-**यदितरेभ्य इति** । दृष्टान्तमाह-**यथा जलमिति** । व्यतिरेक्युपनय-माह—**नचेयमिति** । इय =पृथिवी, तथा =इतरभेदाभावव्यापकगन्धाभाववती न, किन्तु गन्धवतीत्यर्थ. । तस्मात्=इतरभेदाभावव्यापकगन्धाभाववत्त्वात्, तथा= पृथिवी इतरभेदवतीत्यर्थ ।

जिसमें केवल व्यतिरेकव्याप्ति हो वह 'केवलव्यतिरेकि' हेतु है । जैसे-पृथिवी, अन्य ( जलादि ) पदार्थों से भिन्न है, क्योंकि गन्ध रहने से । जो अन्य पदार्थोंसे भिन्न नहीं है उसमें गन्ध भी नहीं होती, जैसे-जल । पृथिवी इतर पदार्थों की तरह गन्ध रहित नहीं है । इस लिये पृथिवी इतर ( जलादि ) पदार्थों से भिन्न है । इस तरह भेदसाध्यक अनुमिति ( जो पदार्थ गन्धवाला है वह इतर पदार्थों से अलग है) में अन्वय दृष्टान्त नहीं है, क्योंकि यहां तो पृथिवीमात्रको ही पक्ष बना लिया गया है, इसलिए पृथिवीत्वहेतु केवलव्यतिरेकी हुआ ।

पक्षस्य किं लक्षणम् ?—

**सन्दिग्धसाध्यवान् पक्षः । यथा-धूमवत्त्वे हेतौ पर्वतः ॥**

पृथिवीमात्रस्य पक्षत्वादित्यत्र किन्नाम पक्षत्वमित्याह—**सन्दिग्धेति** । सन्दिग्धं साध्ये धर्मत्वं यस्या इति व्युत्पत्त्या साध्यप्रकारकसन्देहविशेष्यत्वं पक्षस्य लक्षणम् । अनुमितेः पूर्वं 'पर्वतो वन्हिमान्नवे'तिसंशयो नियमेन जायते, तत्र (संशये)

---

( १ ) जल=तेजो-वायु-आकाश-काल-दिग्-आत्म-मन.सु प्रत्येकं ( अष्ट ) भेद इत्यर्थः ।

पर्वतो विशेष्यम् , वन्हिर्वन्ह्यभावश्च प्रकारः, एवञ्च वन्हिप्रकारसन्देहविशेष्यत्वस्य पर्वते सत्त्वात्तस्य पक्षत्वमिति । इयं पक्षता पक्षत्वं वाऽनुमितिं प्रति कारणम्(१) । उदाहरति—**यथेति** । धूमवत्त्वे हेतौ सति पर्वतः पक्षो भवति ।

जिसमें साध्यका सन्देह हो वह 'पक्ष' है । जैसे–धूम हेतु होने पर पर्वत पक्ष है ।

[ "पर्वतो वह्निमान् धूमात्" यहां पर्वतमें साध्यका सन्देह हुआ अतः 'पर्वत' पक्ष है । जिसका सन्देह हो वह साध्य कहलाता है, इसलिये 'वह्नि' साध्य है । जिससे साध्यका निश्चय किया जाय वह हेतु कहलाता है । इसलिये धूम हेतु है । सर्वत्र साध्य–अनुमितिमें साध्यके प्रति हेतुको व्याप्य और साध्यको व्यापक समझना चाहिये । ]

सपक्षस्य किं लक्षणम् ?—

## निश्चितसाध्यवान् सपक्षः । यथा–तत्रैव महानसम् ॥

प्रसङ्गात्सपक्षस्यापि लक्षणमाह—**निश्चितसाध्येति** । साध्यप्रकारकनिश्चय-विशेष्यत्त्वं सपक्षस्य लक्षणम् । निश्चयाकारश्च–'वन्हिमन्महानसमि'ति, तद्विशेष्यत्वस्य महानसे सत्त्वान्महानसस्य सपक्षत्वम् । उदाहरति—**यथेति** । तत्रैव = धूमवत्त्वे हेतावेव, पर्वते वन्हिसाधनाय धूमवत्त्वे हेतावेवेति भावः । महानसम् = पाकशाले-त्यर्थः तत्र वन्हेः प्रतिदिनं प्रत्यक्षीकरणात् ।

'सपक्ष' ( दृष्टान्तस्थल ) वह कहलाता है जिसमें साध्यका निश्चय हो । यथा–'तत्रैव ( 'पर्वतो वह्निमान् धूमात्' इसी स्थल में ) महानसम् , (पाकशाला) दृष्टान्त है । क्योंकि यहां वह्नि की सत्ता निश्चित है ।

विपक्षस्य किं लक्षणम् ?—

## निश्चितसाध्याभाववान् विपक्षः । यथा–तत्रैव महाह्रदः ।

विपक्षस्य लक्षणमाह–**निश्चितसाध्याभावेति** । साध्याभावप्रकारकनिश्चय-विशेष्यत्वं विपक्षस्य लक्षणम् । निश्चयाकारश्च–'वन्ह्यभाववान् ह्रद'इति, तद्विशेष्यत्वस्य ह्रदे सत्त्वात्तस्य विपक्षत्वम् । उदाहरति–**यथेति** । तत्रैव=धूमवत्त्वे एवेत्यर्थ. ।

'विपक्ष' वह कहलाता है–जिसमें साध्यके अभावका निश्चय हो । जैसे–

---

( १ ) इदं हि प्राचीनमतम् । नवीनास्तु–गगने मेघसंशयाभावेऽपि अनुमितेर्जायमानत्वात्तादृशं पक्षत्वं न सहन्ते, किन्तु अनुमित्युद्देश्यत्वं तत् , पर्वतो वन्हिमानित्यनुमित्युद्देश्यत्वस्य पर्वते सत्त्वात् , गगनं मेघवदित्यत्राप्यनुमित्युद्देश्यत्वस्य गगने सत्त्वात्तत्र तत्र पक्षत्वमव्याहतमेवेति संक्षेपः ।

"पर्वतो वह्निमान् धूमात्" इत्यादि वह्निसाध्यक स्थलमें समुद्र, तालाव, झील आदि विपक्ष है। क्योंकि इन सबों में साध्य ( वह्नि ) नहीं रहता है।

हेत्वाभासाः कतिविधाः ?—

## सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।

हेतुर्हि द्विविधः—सद्धेतु-असद्धेतुरितिभेदादिति पूर्वमुक्तम्। तत्र–अनुमानखण्डादारभ्य एतावत्पर्यन्तं व्याप्तिपक्षधर्मतादिनिरूपणमुखेन सद्धेतुर्निरूपितः। सद्धेतुर्हि—व्याप्तिपक्षधर्मताविशिष्टो हेतुः, सद्धेतुज्ञानस्य फलन्तु तत्प्रयोगेन वादे स्वस्य विजय एव, यथा—पर्वतो वन्हिमानित्यत्र धूमरूपसद्धेतूपन्यासेन वादिनो विजय इति। इदानीं असद्धेतुं निरूपयति। असद्धेतुर्हि व्याप्तिपक्षधर्मतारहितो हेतुः, असद्धेतुज्ञानस्य फलमपि विजय एव, प्रतिवादिना उपन्यस्ते हेतौ असद्धेतुत्वव्यवस्थापनात्स्वस्य विजयः स्फुट एव, स एवाऽसद्धेतुर्हेत्वाभास इति पदेन व्यपदिश्यते। हेतुवत् = सद्धेतुवत् आभासन्त इति हेत्वाभासाः = दुष्टहेतव इति तदर्थः, तथाच व्यभिचारादिदोषान्यतमवत्त्वं हेत्वाभासस्य लक्षणम्, व्यभिचार–विरोधादिदोषान्यतमवत्त्वस्य प्रत्येकं सव्यभिचारादौ सत्त्वाल्लक्षणसमन्वयः। हेत्वाभासस्य भेदानाह—**सव्यभिचारेत्यादिना**। सव्यभिचार—विरुद्ध—सत्प्रतिपक्षित—असिद्ध—बाधित इति भेदेन असद्धेतुः = हेत्वाभासः पञ्चविध इत्यर्थः। सव्यभिचारः = व्यभिचारेण सहितः सव्यभिचारः, व्यभिचाररूपदोषवान्। विरुद्धः = विरोधाख्यदोषवान्। सत्प्रतिपक्षित = सन् = विद्यमानः ( स्वसाध्यस्य अभावसाधकत्वेन वर्तमानः ) प्रतिपक्षः = शत्रुरूपो हेतुर्यस्येति व्युत्पत्त्या सत्प्रतिपक्षाख्यदोषवानित्यर्थः। असिद्धः = असिद्धिरूपदोषवान्। बाधितः = बाधरूपदोषवानित्यर्थः। तथाच व्यभिचार–विरोध–सत्प्रतिपक्ष–असिद्धि–बाध इति भेदेन हेतोर्दोषा अपि पञ्च इत्यायातम्।

**इदमत्र विशेषतो द्रष्टव्यम्।** एषु दोषेषु मध्ये केचन साक्षादनुमितिमेव निरोधयन्ति, केचिच्च तत्करणीभूतं व्याप्तिज्ञानं परामर्शं वा निरोधयन्ति। अनुमितिनिरोधको हि बाधाख्यो दोषः, तत्स्वरूपं साध्याभाववत्पक्ष इति। यथा–'ह्रदो वन्हिमान् धूमादि'ति केनाप्यनुमानं कृतम्। तत्र साध्यम् = वह्निस्तदभावो वह्न्यभावस्तद्वान् = ह्रदरूपपक्षोऽस्तीति बाधदोषस्तादृशदोषवान् धूमहेतुर्बाधित इति गीयते। तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति हि नैयायिकाना नियमः।

एवञ्च यत्र पक्षे = ह्रदे साध्याभाव ( वन्ह्यभाव ) वत्ताज्ञानं जातं कथं ? तत्र साध्य-वत्ताज्ञानं (वन्ह्यनुमितिः) स्यादिति बाधस्य साक्षादनुमितिप्रतिबन्धकता । व्याप्ति-ज्ञानप्रतिबन्धकं हि व्यभिचारज्ञानम् , तद्विषयीभूतव्यभिचाराख्यदोषस्य स्वरूपं साध्याभाववद्वृत्तित्वमिति । 'अयोगोलकं धूमवत् वह्नेरि'त्यत्र साध्यं = धूमस्तदभावो धूमाभावस्तदधिकरणमयोगोलकस्तद्वृत्तित्वं वह्नाविति व्यभिचारदोषः । एवञ्च यत्र वह्निहेतौ साध्यभाववद्वृत्तित्वरूपव्यभिचारज्ञानं तत्र कथं ? साध्यभाववदवृत्तित्वरूपं-व्याप्तिज्ञानं भविष्यति उक्तरीत्या वृत्तित्वज्ञानस्याऽवृत्तित्वबुद्धिं प्रति प्रतिबन्धकत्वा-दित्यनुमितिकरणीभूतव्याप्तिज्ञानप्रतिबन्धकत्वम् । कारणप्रतिबन्धाच्चायोगोलकं धूमवदित्यनुमितिप्रतिबन्धोऽपि बोध्यः । एवमन्येऽपि ज्ञाताः दोषाः एवमेव व्याप्ति-ज्ञानमनुमितिं वा प्रतिबध्नन्तः हेतुं दूषयन्ति । प्रतिबध्या = अनुमितिर्व्याप्तिज्ञानं वा, प्रतिबन्धकम् = दोषज्ञानमिति ध्येयम् ।

एतेन यद्विषयकं ज्ञानं अनुमितितत्करणान्यतरप्रतिबन्धकं तत्त्वं दोषसामान्य-लक्षणं स्फुटितम् । यत्पदम्=दोषपरम् ।

दोषवत्त्वञ्च–एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति संक्षेपः ।

'हेतु' का निरूपण करके अब 'हेत्वाभास' ( दुष्ट हेतु ) का निरूपण करते हैं–

[यथार्थमें जो हेतु नहीं हो पर हेतुकी तरह प्रतीत हो वह 'हेत्वाभास'कहलाता है।]

वह 'हेत्वाभास' पांच प्रकार का है—सव्यभिचार, विरुद्ध, सत्प्रतिपक्ष, असिद्ध और बाधित इस भेद से ।

सव्यभिचारस्य लक्षणं किं, कतिविधश्च सः ?—

**सव्यभिचारोऽनैकान्तिकः । स त्रिविधः–साधारणासाधारणा-नुपसंहारिभेदात् ।**

सव्यभिचाररूपहेत्वाभासस्य लक्षणमाह—**सव्यभिचारेति** । अनैकान्तिक इति पदेन प्राच्यैर्गीयत इति भावः । साधारणाद्यन्यतमत्वं सव्यभिचारस्य लक्षणम् । सव्यभिचारं विभजते–**स त्रिविध इति** । त्रैविध्यं दर्शयति–**साधारणेति** । साधारण–असाधारण–अनुपसंहारीतिभेदेन सव्यभिचारस्त्रिविध इत्यर्थः ।

'सव्यभिचार'–जिसको अनैकान्तिक ( व्यभिचारी ) भी कहते हैं, वह तीन प्रकार का है–साधारण, असाधारण और अनुपसंहारी इस भेद से ।

साधारणस्य किं लक्षणम् ?—

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा–पर्वतो**

**वह्निमान् प्रमेयत्वादिति । ( अत्र ) प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ।**

साधारणस्य लक्षणमाह—**साध्याभाववदिति** । तत्र = त्रिषु मध्ये इत्यर्थः । साध्याभाववद्वृत्तित्वं साधारणस्य लक्षणम् । उदाहरति—**यथेति** । अत्र पर्वत पक्ष , वह्निस्साध्यम् , प्रमेयत्वादिति हेतु , साध्याभावो = वह्न्यभावस्तद्वान् ह्रदस्त-द्वृत्तित्वं प्रमेयत्वे वर्तते इति प्रमेयत्वस्य सर्वत्र विद्यमानत्वात्प्रमेयत्वहेतुः साधारण-व्यभिचारीति । हेतौ साध्याभाववद्वृत्तित्वरूपसाधारण्यज्ञाने जाते सति साध्याभावदवृत्ति-त्वरूपपूर्वपक्षव्याप्तिज्ञानं न सम्भवतीति साधारणस्य व्याप्तिज्ञानप्रतिबन्धकत्वं बोध्यम् ।

एवं (१) अयोगोलकं धूमवत् वह्नेरित्यादौ वह्निहेतु , इयं ( महिषी ), गौ-र्विषाणित्वादित्यादौ विषाणित्वहेतुः एते हिन्दव हिन्दुस्थाननिवासित्वादित्यादौ हिन्दु-स्थाननिवासित्वहेतु., आम्रफलं मधुरं चूषणार्हत्वादित्यत्र चूषणार्हत्वहेतुः, भवनं विशालं वासयोग्यत्वादित्यादौ वासयोग्यत्वहेतु , नरशिर.कपालं शुचि अस्थि-त्वात् शंखवदित्यादौ अस्थित्वहेतुश्च साधारणव्यभिचारी बोध्य ।

**साधारण हेतु ( साधारण व्यभिचारी हेत्वाभास ) वह कहलाता है, जो साध्या-भावके अधिकरणमें रहने वाला हो । जैसे-"पर्वतो वह्निमान् प्रमेयत्वात्" ( अर्थात् पर्वतमें आग है, क्योंकि इसमें प्रमेयत्व रहता है ) इस स्थलमें जो प्रमेयत्व हेतु है, वह साध्याभाव ( वह्न्यभाव ) के अधिकरण जलादिमें भी रहता है । क्योंकि सब पदार्थों में प्रमाविषयत्व रूप प्रमेयत्व रहता है । तस्मात् यह हेतु साधारण-अनैकान्तिक ( व्यभिचारी ) है ।**

---

(१) १—अयोगोलकमिति० । अत्र साध्यं धूमस्तदभावो धूमाभावस्तदधिकरणं अयोगोलकं तत्र वन्हेर्वर्तमानत्वात्तस्य साधारणव्यभिचारित्वम् ।

२—इयमिति० । साध्याभाववति = गोत्वाभाववति महिष्यां विषाणित्वस्य वर्तमानत्वात् ।

३—एत इति० । हिन्दुत्वाभाववति यवने हिन्दुस्थाननिवासित्वस्य सत्वात् ।

४—आम्र इति० । मधुरत्वाभाववति जम्बीरे चूषणार्हत्वस्य विद्यमानत्वात् ।

५—भवनमिति० । विशालत्वाभाववति कुट्या वासयोग्यत्वस्य सत्त्वात् ।

६—नरशिर इति० । शुचित्वाभाववति नरशिर.कपाले अस्थित्वस्य सत्त्वा-देतेषां साधारणव्यभिचारित्वं बोध्यम् ।

असाधारणस्य किं लक्षणम् ?

**सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा- शब्दो नित्यः शब्दत्वादिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ।**

असाधारणस्य लक्षणमाह-**सर्वसपक्षेति** । सर्वसपक्षव्यावृत्त सर्वविपक्षव्यावृत्तश्चेत्यन्वयः, सपक्षः=निश्चितसाध्यवान् , विपक्षः=निश्चितसाध्याभाववानित्यर्थ., तथाच सपक्षविपक्षव्यावृत्तत्वे सति पक्षमात्रवृत्तित्वं असाधारणस्य लक्षणम् । उदाहरति=**यथेति** । अत्र शब्द. = पक्ष., नित्यत्वं = साध्यम् , शब्दत्वादिति = हेतुः । लक्षणं सङ्गमयति-**शब्दत्वं सर्वेभ्य इति** । शब्दत्वं हि सपक्षे परमाण्वादौ अथच घटादावपि विपक्षेऽवर्तमानं केवलं शब्दरूपे पक्षे वर्तत इति । ननु एतेन किं स्यादिति चेत् । शृणु । सर्वसपक्षेत्यादेः निश्चितसाध्यवदवृत्तित्वमित्यत्र तात्पर्यम् । साध्यवदवृत्तित्वञ्च साध्यासामानाधिकरण्यम् । एवञ्च हेतौ साध्यासामानाधिकरण्ये निश्चिते सति हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानं न स्यादिति व्याप्तिज्ञानप्रतिवन्धकत्वमसाधारण्यस्येति वोध्यम् ।

[ एवं (१)पृथिवी गुणः गन्धवत्वात् , शब्दो नित्य श्रावणत्वात् , जलं सुरभि जलत्वादित्यादौ गन्धवत्वश्रावणत्व-जलत्वादेरसाधारणव्यभिचारित्वं वोध्यम् । ]

'असाधारणहेतु, वह कहलाता है, जो हेतु सभी सपक्षों और विपक्षों में न हो, किन्तु पक्ष मात्रमें ही रहे। जैसे-"शब्दो ( पक्ष ) नित्यः ( साध्य ) शब्दत्वात्" ( हेतु ) (अर्थात् शब्द नित्य है, क्योंकि इस में शब्दत्व रहने से ) इस जगहमें जो शब्दत्वरूप हेतु है, वह सभी नित्य आकाशादि और अनित्य घटादि पदार्थों में नही रहता, किन्तु शब्दमें ही रहता है। इसलिये यह हेतु असाधारणव्यभिचारी हेत्वाभास है।

---

(१) १—पृथिवीति० । अत्र गन्धवत्त्वस्य सपक्षे गुणादौ विपक्षे जलादौ, च अवृत्तित्वात्केवलपक्षीभूतपृथिवीमात्रवृत्तित्वाच्च असाधारणत्वम् ।

२—शब्द इति । सपक्षे परमाण्वादौ, विपक्षे च घटादौ श्रावणत्वस्य अवर्तमानत्वात्पक्षीभूतशब्दे वर्तमानत्वाच्च तस्य आसाधारणत्वम् ।

३—जलमिति० । सपक्षे पृथिव्यां विपक्षे वाय्वादिषु अवर्तमानत्वात् पक्षे जले च वर्तमानत्वाज्जलत्वस्यासाधारणत्वं वोध्यम् ।

अनुपसंहारिणः किं लक्षणम् ?

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा—सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति ।**

अनुपसंहारिणो लक्षणमाह—**अन्वयेति** । अन्वयदृष्टान्तरहितत्वे सति व्यतिरेकदृष्टान्तरहितहेतुत्वं अनुपसंहारिणो लक्षणम् । उदाहरति—**यथेति** । लक्षणं सङ्गमयति—**अत्रेति** । अत्र सर्वपदार्थस्यैव पक्षीकरणात् यत्र यत्र प्रमेयत्वं तत्र तत्राऽनित्यत्वं यथा-'xxx'इति अन्वयदृष्टान्ताभावात्, यत्रानित्यत्वाभावस्तत्र प्रमेयत्वाभावः यथा-'xxx'इति व्यतिरेकदृष्टान्ताभावात्प्रमेयत्वहेतौ अन्वयि व्यतिरेकि चोभयविधमपि व्याप्तिज्ञानं न स्यादिति व्याप्तिज्ञानप्रतिबन्धादयं प्रमेयत्वहेतुः अनुपसंहारिव्यभिचारीत्यर्थः ।

[ (१) एवं 'सर्वं नाना वाच्यत्वात्' इत्यादौ वाच्यत्वहेतुः 'सर्वं नित्यं घटत्वादित्यादौ घटत्वहेतुश्चानुपसंहारी बोध्यः । ]

'अनुपसंहारी हेतु वह कहलाता है, जो हेतु अन्वयव्याप्ति और व्यतिरेकव्याप्ति के दृष्टान्तसे रहित हो। जैसे-"सर्वमनित्यं प्रमेयत्वात्" (अर्थात सभी पदार्थ अनित्य हैं, क्योंकि सभीमें प्रमेयत्वरहनेसे) इस स्थलमें सभी पदार्थ पक्षके अन्तर्भूत है, अतः कोई भी दृष्टान्तस्थल नहीं हैं। तस्मात् यह प्रमेयत्वरूप हेतु अनुपसंहारी-अनैकान्तिक हेत्वाभास है ।

विरुद्धस्य किं लक्षणम् ?—

**साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा—शब्दो नित्यः कृतकत्वादिति । (अत्र) कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ।**

विरुद्धस्य लक्षणमाह—**साध्याभावव्याप्त इति** । व्याप्तो नाम—व्याप्तिमानित्यर्थः । साध्याभावव्याप्तिः=साध्याभावनिरूपिता व्यतिरेकव्याप्तिरित्यर्थः । साध्याभावो हि प्रकृते नित्यत्वाभावस्तन्निरूपिता व्यतिरेकव्याप्तिश्च—नित्यत्वाभावाभाव-( नित्यत्व ) व्यापकीभूतकृतकत्वाभावप्रतियोगित्वरूपा बोध्या। तथाच साध्य-( साध्याभावाभाव ) व्यापकीभूताभावप्रतियोगिहेतुत्वं विरुद्धस्य लक्षणम् । विरुद्ध-

( १ ) सर्वमितिः। अत्र स्थलद्वयेष्वपि सर्वस्यैव पक्षतया पक्षतायाश्च साध्यसंशयरूपतया कुत्रापि निश्चितसाध्यकस्यान्वयदृष्टान्तस्य, निश्चितसाध्याभावकस्य व्यतिरेकदृष्टान्तस्याभावात्तादृशवाच्यत्वघटत्वहेत्वोरनुपसंहारित्वं बोध्यम् ।

मुदाहरति—**यथा शब्दो नित्य इति** । अत्र साध्यम्=नित्यत्वम् , तद्व्यापकीभूतो योऽभावः कृतकत्वाभावस्तत्प्रतियोगिहेतुत्वस्य कृतकत्वे सत्त्वाल्लक्षणसङ्गति ।

पक्षे हेतुमत्तानिश्चयकाले हेतौ साध्याभावव्याप्यत्वनिश्चयाद् उत्तरकाले साध्यानुमितिप्रतिवन्ध एव फलम् । प्रतिवन्धकता चास्य निश्चयविशिष्टनिश्चयत्वेनेति संक्षेप. ।

एवं (१)अयं गौरश्वत्वादित्यादौ अश्वत्वहेतु , शब्दो नित्यः बाह्येन्द्रियग्राह्यत्वादित्यादौ बाह्येन्द्रियग्राह्यत्वहेतुः, शब्दो नित्यः उत्पत्तिधर्मवत्त्वादित्यादौ उत्पत्तिधर्मवत्त्वहेतु·, घटो गुण· द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः,मम माता वन्ध्या मन्मातृत्वादित्यादौ मातृत्वहेतुश्च विरुद्धो ज्ञेय. ।

**तीनों प्रकारोंके सव्यभिचारों ( अनैकान्तिकों ) का निरूपण करके अब विरुद्ध हेत्वाभासका निरूपण करते हैं—**

'विरुद्ध हेत्वाभास' वह कहलाता है, जो हेतु साध्याभावसे व्याप्त हो, जैसे-"शब्दो नित्यः कृतकत्वात घटवत्" (अर्थात् शब्द नित्य है, क्योंकि उसमें घटके ऐसा कृतकत्व ( कार्यत्व ) रहने से ) इस स्थलमें कृतकत्वरूप हेतु नित्यत्वाभाव ( अनित्यत्व ) से व्याप्त है । तस्मात् यह कृतकत्वरूप हेतु विरुद्ध ( साध्यविरोधी ) हेतु कहाता है ।

सत्प्रतिपक्षस्य किं लक्षणम् ?

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । यथा—शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद्घटवत् ।**

सत्प्रतिपक्षस्य लक्षणमाह—**साध्याभावसाधकमिति** । यस्य=हेतोः,

---

( १ ) १—अयमिति० । गोत्वाधिकरणे गवि अश्वत्वस्यावर्तमानत्वात् ।

२—शब्द इति० । नित्यत्वाधिकरणे परमाण्वादौ बाह्येन्द्रियग्राह्यत्वस्यावर्तमानत्वात् ।

३—शब्द इति० । नित्यत्वाधिकरणे परमाण्वादौ उत्पत्तिधर्मवत्त्वस्यासत्त्वात् ।

४—घट इति० । गुणत्वाधिकरणे रूपादौ द्रव्यत्वस्यासत्त्वात् ।

५—मम मातेति० । वन्ध्यात्वाधिकरणे निःसन्तानवत्यां मन्मातृत्वस्यासत्त्वात्तस्य तस्य हेतोर्विरुद्धत्वं बोध्यम् ।

साध्याभावसाधकम् = साध्याभावानुमितिजनकम् ,हेत्वन्तरम् = प्रतिपक्षी हेतुर्विद्यते स हेतु॰ सत्प्रतिपक्ष इत्यर्थ॰ । तथाच साध्याभावव्याप्यप्रतिहेतुमत्पक्षरूपदोषवत्त्वं सत्प्रतिपक्षस्य लक्षणम् । सत्प्रतिपक्षमुदाहरति—**यथेति । अत्रायमभिसन्धिः**— वादिना शब्दो नित्य॰ श्रावणत्वाच्छब्दत्ववदित्युक्तम् , श्रावणत्वात् = श्रवणेन्द्रिय-ग्राह्यत्वादित्यर्थ । तदुपरि प्रतिवादिना सत्प्रतिपक्षदोषो दत्तश्श्रावणत्वहेतौ, 'तव हेतुस्सत्प्रतिपक्षित॰' इति । कथम् ? नित्यत्वाभावसाधकस्य कार्यत्वहेतोश्शब्दे सत्त्वात् , तथाच शब्दोऽनित्य॰ कार्यत्वाद्घटवदिति प्रतिवादिप्रयुक्तमनुमानम् । एवञ्च साध्याभाव॰ = नित्यत्वाभावोऽनित्यत्वं तद्व्याप्य = तन्निरूपितव्याप्तिमान् य॰ प्रति-हेतु = कार्यत्वादिति तद्वान् शब्द इति तादृशदोषवत्त्वस्य कार्यत्वहेतौ सत्त्वात्तस्य सत्प्रतिपक्षत्वमिति । अयं हि सत्प्रतिपक्षदोषो यावत्कालमेकत्र पक्षे अप्रामाण्य-ज्ञानं न भवति तावत्कालं परस्परमनुमितिं प्रतिबध्नाति, 'साध्याभावव्याप्यहेतुमान् पक्ष॰' इति साध्याभावानुमितिजनकपरामर्शसत्त्वे साध्यवत्त्वाऽनुमिते कथमप्यनुदया-दनुमितिप्रतिबन्धकत्वं स्फुटमेव, एवं प्रतिवाद्यभिमतसाध्याभावानुमितिरपि 'साध्य-व्याप्यहेतुमान् पक्ष' इति वादिन॰ साध्यानुमितिजनकपरामर्शसत्त्वादसम्भवीति परस्परानुमितिप्रतिबन्ध स्फुट एव । यदा चैकत्राप्रामाण्यज्ञान तदैवान्यकोटिका-नुमिति । विरुद्धे साध्याभावसाधकस्य साध्यसाधकस्य च हेतोरैक्यम् , सत्प्रतिपक्षे तु भावाभावसाधकं हेत्वन्तरं भवतीति तयोर्विशेषो ज्ञेय इति हृदयम् ।

एवमेव क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वादाकाशवदित्यत्र क्षित्यङ्कुरा॰ दिकं कर्तृजन्यं कार्यत्वाद्घटवदिति, चाण्डालादीनामस्पृश्यता समीचीन। शास्त्रप्रति-पादितत्वादित्यत्र तादृशास्पृश्यताऽसमीचीना संघीकरणप्रतिबन्धकत्वादिति, ह्रदो वह्निमान् धूमादित्यत्र ह्रदो वन्ह्यभाववान् जलादित्याद्यो॰ हेत्वन्तरयोः सत्त्वाच्छरीरा-जन्यत्वहेतु॰, शास्त्रप्रतिपादितत्वहेतु॰, धूमहेतुश्च सत्प्रतिपक्षो ज्ञेय॰ ।

'सत्प्रतिपक्ष हेत्वाभास' वह कहलाता है, जिस हेतुके साध्याभावका साधक ( सिद्ध करने वाला ) दूसरा हेतु हो । जैसे "शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्" ( शब्द नित्य है, क्योंकि उसमें श्रवणेन्द्रियग्राह्यत्व रहता है, जैसे-शब्दत्व जाति ) । इस स्थलमें "शब्दोऽनित्यः कार्यत्वात्, घटवत्" ( शब्द अनित्य है, क्योंकि उसमें कार्यत्व रहता है, जैसे-घट ) यहां कार्यत्वरूप हेतु साध्याभावका साधक (अनुमापक) बनकर बैठा है । तस्मात् श्रावणत्वरूप हेतु 'सत्प्रतिपक्ष-हेत्वाभास' कहलाता है । इसी तरह कार्यत्वरूप हेतुका नित्यत्वरूप—साध्याभावसाधक श्रावणत्वरूप दूसरा

हेतु होकर बैठा है । अतः कार्यत्वरूप हेतु भी 'सत्प्रतिपक्ष-हेत्वाभास, कहलाता है ।

असिद्धः कतिविधः ?

**असिद्धस्त्रिविधः–आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति ।**

असिद्धं निरूपयति—**असिद्ध इति** । आश्रयासिद्धाद्यन्यतमत्वं असिद्धस्य लक्षणम्, आश्रयासिद्धाद्यन्यतमत्वस्य प्रत्येकम् आश्रयासिद्धादिपु सत्त्वाल्लक्षणसङ्गतिः । असिद्ध विभजते–**असिद्धस्त्रिविध इति** । त्रैविध्यं दर्शयति–**आश्रयेत्यादिना** ।

'असिद्ध' हेत्वाभास तीन प्रकार का है-आश्रयासिद्ध, स्वरूपासिद्ध, और व्याप्यत्वासिद्ध इस भेद से ।

आश्रयासिद्धः कः ?

**आश्रयासिद्धो यथा—गगनारविन्दं सुरभि, अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव ।**

पक्षतावच्छेदकाभाववत्पक्ष आश्रयासिद्धिस्तद्वान् यो हेतु. स आश्रयासिद्ध इति । आश्रयासिद्धमुदाहरति—**आश्रयासिद्धो यथेति** । अरविन्दम्=कमलम् । गगनारविन्दमिति पक्ष, सुरभिः = सुरभिगन्धवान् इति साध्यम्, अरविन्दत्वादिति हेतुः, सरोजारविन्दवदिति दृष्टान्तः । अत्र पक्षतावच्छेदकीभूतगगनीयत्वविशिष्टपक्षस्य गगनारविन्दस्याऽप्रसिद्ध्या तत्साधकहेतोराश्रयासिद्धत्वम् । आश्रयासिद्धिश्च परामर्शप्रतिबन्धद्वाराऽनुमितिं प्रतिबध्नाति, पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्ध्या 'सुरभित्वव्याप्यारविन्दत्ववद्गगनारविन्दमि'ति परामर्शासम्भवादिति ।

एवं काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ 'काञ्चनमयत्वाभाववान्पर्वत.' इति, शशशृङ्गं वक्रं शृङ्गत्वान्महिषशृङ्गवदित्यादौ च 'शशीयत्वाभाववच्छृङ्गम्' इति च आश्रयासिद्धिस्तद्वान् धूमहेतुश्शृङ्गत्वहेतुश्चाऽऽश्रयासिद्ध इति ।

[ 'आश्रयासिद्ध वह कहलाता है, जिस हेतु का आश्रय (पक्ष) अप्रसिद्ध हो । ]

आश्रयासिद्धका उदाहरण यथा-"गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत्" (अर्थात् आकाश का कमल सुगन्धित है, क्योंकि इसमें भी तालाव के कमल के समान कमलत्व है ) इस स्थल में आकाशकमलरूप आश्रय ही अप्रसिद्ध है, क्योंकि आकाश में कमल उत्पन्न होता ही नहीं है । तस्मात् यह आश्रयासिद्ध हेत्वाभासका उदाहरण हुआ ।

स्वरूपासिद्धस्य किं रूपम् ?

**स्वरूपासिद्धो यथा—शब्दो गुणश्चाक्षुषत्वात् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ।**

स्वरूपासिद्धं निरूपयति—**स्वरूपासिद्ध इति** । पक्षे हेत्वभाव स्वरूपासिद्धिस्तद्वान् हेतु स्वरूपासिद्ध. । स्वरूपासिद्धमुदाहरति—**यथेति** । अत्र शब्दः = पक्ष·, गुण. = गुणत्ववान् इति साध्यम् , चाक्षुषत्वादिति = हेतु. । लक्ष्ये लक्षणं सङ्गमयति—**अत्रेति** । 'हेत्वभाववान् पक्षः' इति ज्ञानसत्त्वे 'साध्यव्याप्यहेतुमान्पक्षः' इति परामर्शो न भविष्यतीति स्वरूपासिद्धे परामर्शप्रतिबन्धकत्वम् ।

एवं अयं गौ. एकशफवत्वात् , मनुष्य. पशुः लोमवल्लाङ्गुलवत्त्वात् , जलं द्रव्यं पीतरूपवत्त्वादित्यादौ एकशफवत्त्वाभाववान् गौ , लोमवत्लाङ्गुलवत्त्वाभाववान्मनुष्य., पीतरूपाभावज्जलमित्येवंरूपाः स्वरूपासिद्धयस्तद्वांश्च प्रत्येकं हेतु· स्वरूपासिद्धो ज्ञेय इति ।

[ स्वरूपासिद्ध हेतु वह कहलाता है जिस हेतु का अभाव पक्ष में हो । ]

'स्वरूपासिद्ध' का उदाहरण जैसे-"शब्दो गुणश्चाक्षुषत्वात्" । ( शब्द गुण है, क्योंकि उसमें चाक्षुषत्व है ) यहां पर शब्द में चाक्षुषत्व ( आंखों से देखने योग्य धर्म ) नहीं है, क्योंकि शब्द तो केवल कानों से ही सुना जाता है । तस्मात् यहां शब्दरूप पक्ष में चाक्षुषत्व रूप हेतु असिद्ध है, अतः यह स्वरूपासिद्ध हेत्वाभास है।

व्याप्यत्वासिद्धः कः किञ्चोपाधिस्वरूपम् ?

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्—साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम्—साधनाव्यापकत्वम् । यथा—पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः । तथाहि—यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम् । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ।**

ननु सोपाधिकस्य अतिरिक्तस्य सद्भावात् कथं पञ्च हेत्वाभासा इत्यत आह—**सोपाधिक इति** । व्याप्यत्वासिद्धि =व्याप्त्यभाव·, तस्या· सोपाधिकहेतौ नियमेन सत्त्वात् सोपाधिको हेतुर्व्याप्यत्वासिद्ध एव, न तु अतिरिक्तो हेत्वाभास इति भाव· । तथाच सोपाधिकत्वं व्याप्यत्वासिद्धस्य लक्षणम् । अथ का नाम उपाधिरित्याशङ्कायामाह—**साध्यव्यापकेति** ।

साध्यव्यापकत्वं किं तदाह—**साध्यसमानाधिकरणेति** । साधनाव्यापकत्वं किमित्याह—**साधनेति** । उदाहरति—**यथेति** । अत्र पर्वत पक्षः, धूमः साध्यम् , वह्निर्हेतु· । तत्र आर्द्रेन्धनसंयोग उपाधिरस्ति, आर्द्रं यदिन्धनं काष्ठादिकं तत्संयोगेन हि धूमोत्पत्तिः । लक्ष्ये लक्षणं सङ्गमयति–**तथाहीति** । आर्द्रेन्धनसंयोगे साध्यव्यापकत्वमस्ति, साध्यम् = धूमस्तदधिकरणं पर्वतादिस्तत्र वर्तमानोऽभावो न आर्द्रेन्धनसंयोगाभावस्तेन विना धूमस्याऽनुदयात् , किन्तु उदासीनघटाद्यभाव एव तत्प्रतियोगित्वं घटे अप्रतियोगित्वं आर्द्रेन्धनसंयोगे इति । एवं साधनाऽव्यापकत्वमपि, साधनं = वह्निस्तदधिकरणं यथा पर्वतस्तथा अयःपिण्डोऽपि तत्र वर्तमानो योऽभाव आर्द्रेन्धनसंयोगाभावस्तत्प्रतियोगित्वं आर्द्रेन्धनसंयोगे इति आर्द्रेन्धनसंयोगे साध्यव्यापकत्वे सति साधनाव्यापकत्वस्य सत्त्वात् तस्य उपाधित्वम् । एवञ्च प्रकृते धूमव्यापकत्वं आर्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतं तदेव व्यभिचरितत्वम् । तथाच उपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचरितत्वं गृहीतमेव । अनुमानप्रकारश्च–पूर्वानुमानहेतुं पक्षीकृत्य 'वह्निर्धूमव्यभिचारी, धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वाद्घटत्वादिवत् , 'यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारी'ति । एवं प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । एवञ्च हेतौ व्यभिचारज्ञानसत्त्वे व्याप्तिग्रहप्रतिबन्धः फलमिति(१) ।

---

( १ ) अत्रेदमवधेयम्—साध्ये साध्यतावच्छेदकस्याभावो साध्याऽप्रसिद्धिः, तद्वान् हेतुस्साध्याप्रसिद्धः । यथा—पर्वतः काञ्चनमयवह्निमान् धूमादित्यत्र वह्निरूपसाध्ये काञ्चनमयत्वाभावस्य सत्त्वात्तद्वत्त्वस्य च हेतौ धूमे सत्त्वात् धूमस्य साध्याप्रसिद्धत्वम् । एवं हेतौ हेतुतावच्छेदकस्याभावो हेत्वसिद्धिस्तद्वांश्च हेतुर्हेत्वसिद्ध इति । यथा—पर्वतो वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वाभाववद्धूमरूपा-

'व्याप्यत्वासिद्ध' हेतु वह कहलाता है जो हेतु उपाधिसे युक्त हो।

[ जैसे-"पर्वतो धूमवान्, वह्नेः" (अर्थात् पर्वत अग्नि युक्त होनेसे धूमवाला है ) इस स्थलमें वह्निरूप हेतु आर्द्रेन्धन (गीली लकड़ी) संयोगरूप उपाधिसे युक्त है। ]

'उपाधि' वह है, जो साध्यका 'व्यापक' होकर हेतुका 'अव्यापक' हो।

'साध्यव्यापक' वह कहलाता है जो साध्यके अधिकरणमें रहनेवाले अत्यन्ताभावका प्रतियोगी न हो।

[ जैसे-'पर्वतो धूमवान्, वह्नेः' इसी स्थलमें साध्य का अधिकरण जो पर्वत है, उसमे रहनेवाले अभाव जो घटाभावपटाभावादि हैं, उनके प्रतियोगी आर्द्रेन्धनसंयोग नहीं है। यतः 'यस्याऽभावः स प्रतियोगी' ऐसा सिद्धान्त है। तस्मात् आर्द्रन्धनसंयोग साध्यव्यापक है। ]

'साधनाव्यापक' वह कहलाता है जो हेतु के अधिकरणमें रहनेवाले अभावका प्रतियोगी हो।

[ जैसे-'धूमवान् वह्नेः' इस स्थलमें हेतुका अधिकरण जो अयोगोलक ( आग से लाल लोहेका गोला ) है उसमें रहने वाले अभाव का प्रतियोगी आर्द्रेन्धनसंयोग भी है, क्योंकि अयोगोलक में आर्द्रेन्धनसंयोगाभाव स्वतःसिद्ध है। तस्मात् आर्द्रेन्धनसंयोग 'साधनाव्यापक' भी है। ]

एवञ्च "पर्वतो धूमवान्, वह्निमत्त्वात्" इस स्थलमें आर्द्रेन्धनसंयोगरूप उपाधि हुई। क्योंकि जहां ( पर्वतमें ) धूम है, वहां आर्द्रेन्धनसंयोग है, इसलिये उसमें साध्यव्यापकता और जहां ( अयोगोलकमें ) आग है, वहां आर्द्रेन्धनसंयोग नहीं है, इसलिये साधनाव्यापकता भी सिद्ध है।

तस्मात् उक्त लक्षणमें-साध्यव्यापक और साधनाव्यापक होने से आर्द्रेन्धनसंयोग उपाधि है, ऐसा सिद्ध हुआ। एवंच इस ( आर्द्रेन्धनसंयोगरूप ) उपाधि से युक्त धूमसाध्यकवह्निहेतुकस्थलमें-वह्निव्याप्यत्वासिद्ध है। तस्मात् उपाधियुक्तव्याप्यत्वासिद्ध हेत्वाभास का उदाहरण 'पर्वतो धूमवान् वह्नेः' इस स्थल में 'वह्नि" को समझना चाहिये। इसी तरह-"क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका, हिंसात्वात् क्रतुबाह्यहिंसावत्" ( अर्थात् यज्ञमें होनेवाली हिंसा अधर्म जनक है, क्योंकि उसमें भी यज्ञातिरिक्त हिंसा की तरह हिंसात्व है ) इस स्थलमें निषिद्धत्व रूप उपाधि है।

बाधितस्य किं लक्षणम् ?

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः।**

---

हेत्वसिद्धिस्तद्यथा काञ्चनमयधूमादितिहेतुर्हेत्वसिद्ध इति। एतयोः व्याप्यत्वासिद्धान्तर्भावान्न पञ्चत्वव्याघात इति।

**यथा—वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम् ।**

**इति अनुमानपरिच्छेदः ।**

---

बाधितस्य लक्षणमाह—**यस्येति** । यस्य=हेतोः, साध्याभावः, प्रमाणान्तरेण=प्रत्यक्षादिनेत्यर्थः । साध्याभाववत्पक्षत्वं बाधत्वं, तद्वांश्च हेतुर्बाधित इति । उदाहरति—**यथा वह्निरिति** । अत्र 'उष्णत्ववान् वह्निरि'ति प्रात्यक्षिको बाधस्तद्वत्त्वस्य हेतौ सत्त्वाल्लक्षणसमन्वयः । बाधदोषस्य साध्याभावावगाहितया साक्षादनुमितिप्रतिबन्धकत्वं बोध्यम् ।

एवं (१)मुसलिमलीगसंस्था हिन्दुहितकारिणी राष्ट्रीयसंस्थात्वादित्यत्र, मुसलिमलीगसंस्था न हिन्दुहितकारिणीति बाध', ह्रदो वह्निमान् धूमादित्यत्र वन्ह्यभाववद्ह्रदो बाधः, उत्पत्तिकालीनो घटः (२)गन्धवान् पृथिवीत्वादित्यत्र गन्धाभाववान् उत्पत्तिकालीनो घट इति बाध , ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्यत्र ब्राह्मणेन न सुरपेया इति बाध., शब्दोऽश्रावणो गुणत्वादित्यत्र श्रावणशब्दो बाधस्तद्वत्त्वञ्च प्रत्येकं हेतौ सत्त्वात्तस्य तस्य बाधितत्वं बोध्यम् ।

क्वचित्पञ्चानामपि दोषाणां सम्भवो यथा—वायुर्गन्धवान् स्नेहादित्यत्र पञ्च दोषाः सन्ति, तथाहि—गन्धाभाववद्वृत्तिस्नेहरूपव्यभिचारः, गन्धाऽसमानाधिकरणस्नेह इति विरोधः, वायुर्गन्धाभाववान् रूपभावादिति सत्प्रतिपक्षः, स्नेहाभाववान् वायुरिति असिद्धिः, गन्धाभाववान् वायुरिति बाधश्चेति ध्येयम् ।

इति कमलायामनुमानखण्डम् ।

---

( १ ) अत्र ब्राह्मणे सुरापानाभावस्यैव आगमेन निश्चयात्, अन्यत्र संस्थादिषु हिन्दुहितकर्तृत्वाभावादेश्च प्रत्यक्षेण निश्चयादिति ध्येयम् ।

( २ ) उत्पत्तिकालीन.=उत्पत्तिप्रथमक्षणावच्छिन्नो घट इत्यर्थ., तत्र ( उत्पत्तिप्रथमक्षणावच्छिन्ने द्रव्ये )कोऽपि गुणो न वर्तते, 'उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठती'ति न्यायसिद्धान्तादिति गन्धाभावस्तत्र सुतरां सिद्ध एवेति ध्येयम् ।

बाधितरूप हेतु वह कहलाता है, जिस हेतुका साध्याभाव प्रमाणान्तर से पक्ष में सिद्ध हो। यथा-"वह्निः अनुष्णः, द्रव्यत्वात्" ( अर्थात् आग ठण्ढी है, क्योंकि उस में द्रव्यत्व रहनेसे ) इस स्थलमें जो अनुष्णत्व ( ठण्ढापन ) है उसका अभाव जो उष्णत्व ( गरम ) है, वह प्रत्यक्ष प्रमाण से आगमें सिद्ध है। तस्मात् इस स्थल में द्रव्यत्वरूप हेतु बाधितहेत्वाभासका उदाहरण है।

इस प्रकार 'इन्दुमती' नामक हिन्दी टीकामें अनुमानपरिच्छेद समाप्त हुआ।

## अथोपमानखण्डम्।

उपमानलक्षणं किम्?

**उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथाहि—कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषात्—गोसदृशो गवय—इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति। तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते।**

इति उपमानपरिच्छेदः।

### अथ उपमाननिरूपणम्।

अत्र उपमितिः फलम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, उपमानं करणम्, उपमानं नाम=सादृश्यज्ञानम्, करणलक्षणादिकं पूर्ववद्बोध्यम्। तथाच उपमितिकरणत्वं उपमानस्य लक्षणम्। अथ का नाम उपमितिरित्याशङ्कायामाह—**संज्ञासंज्ञीति**। संज्ञा=पदम्, सञ्ज्ञी=अर्थस्तयोर्यः सम्बन्धः=शक्तिरूपस्तज्ज्ञानमित्यर्थः। एवञ्च सादृश्यज्ञानकरणकत्वे सति पदपदार्थसम्बन्धज्ञानत्वमुपमितेर्लक्षणम्। पदपदार्थयोश्चैकः शक्त्याख्यः सम्बन्धविशेषो नैयायिकैः स्वीक्रियते, स च न सप्तपदार्थातिरिक्तः, किन्तु ईश्वरेच्छारूप एवगुणपदार्थः। तस्याधिकरणमर्थः, आधेयश्च पदम्, यत् आधेयं तत्प्रतियोगि, यच्चाधिकरणं तदनुयोगीति गीयते, एवञ्च पदप्रतियोगिको अर्थानुयोगिकश्च यः शक्त्याख्यः सम्बन्धस्तज्ज्ञानमेव उपमानस्य फलम्, तज्ज्ञानेन चाग्रे शब्दखण्डोक्तदिशा शाब्दबोधोऽपि जायत इति बोध्यम्।

तादृशशक्तिज्ञानं प्रति करणं किमित्याह—**तत्करणमिति** । शक्तिग्राहकाणाञ्च परिगणनं शास्त्रे कृतमस्ति ।

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।' इति ।

अथ कथमुपमानेन शक्तिग्रह इत्याशङ्कां निरसितुं उपमानं रूपकत्वेन विविच्य दर्शयति—**तथाहीति** । कश्चित् = पुरुषः गवयपदार्थज्ञानाभाववानित्यर्थः, कस्यचिदरण्यवासिनो मुखाद् 'गोसदृशो गवयपदार्थ' इति श्रुतवान्, श्रुत्वा चैकदा स वनं जगाम, तत्र गोसदृशं पिण्डं = आकारविशेषम् दृष्ट्वा वाक्यार्थं = 'गोसदृशो गवयः' इति आरण्यकोक्तवाक्यार्थं (१)स्मरति, अयमेवाऽत्र व्यापारः, तदनन्तरं 'गवयो गवयपदवाच्यः' इति यज्ज्ञानं जायते सैवोपमितिरिति भावः ।

इति कमलायामुपमानखण्डम् ।

---

अब 'उपमान' का निरूपण करते हैं—

"उपमितिकरणमुपमानम्" अर्थात् उपमिति का करण ( असाधारण कारण ) उपमान है । एवम् 'संज्ञा-संज्ञी' अर्थात् पद और अर्थ इन दोनों का जो शक्ति रूप सम्बन्ध है, उसका ज्ञान उपमिति है और उस उपमिति का करण सादृश्यज्ञान है । ( तस्मात् सादृश्यज्ञान ही उपमान कहलाता है ) । यथा-कोई ग्रामीण ( देहाती ) मनुष्य जो कि 'गवय' शब्द का अर्थ जानता न था, किसी जङ्गली पुरुष के मुख से "गोसदृशो गवयः" अर्थात् गवय गाय की तरह एक जङ्गली जानवर होता है यह सुन कर किसी कारणवश जंगल में गया और वहां जाकर उक्त "गो सदृशो गवयः" इस वाक्यार्थ को स्मरण करते हुए गाय के समान किसी जन्तु को देखा, तब 'यह ( जन्तु ) 'गवय' शब्द वाच्य है, यह उपमिति उसे होती है ।

इस तरह 'इन्दुमती' नामक टीकामें उपमानपरिच्छेद समाप्त हुआ ।

---

( १ ) अत्राय विवेकः—वाक्यार्थं स्मरन्नित्यत्र वर्तमानसामीप्ये लटं विधाय प्राचीनमतानुसारीदं ग्रन्थसंल्लपनम् , तन्मते व्यापारवदसाधारणं कारणमेव करणमिति नियमात् , तदेव प्रकृते सारल्यतयोपनिबद्धम् । असाधारणकारणत्वमात्रस्य करणत्वमिति नव्यमताश्रयणे त्वयं ग्रन्थः सुन्दरतया निरूपयितुं शक्यः । तन्मते स्मरणं सादृश्यज्ञानजन्यमुद्बोधकान्तरजन्यं वा भवतु, तदुभयमपि सादृश्यदर्शनस्य सहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारीति ध्येयम् ।

## अथ शब्दखण्डम् ।

शब्दप्रमाणस्य किं स्वरूपम् ?

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा—गामानयेति । शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः ।**

### अथ शब्दखण्डनिरूपणम् ।

शब्दप्रमाणस्य लक्षणमाह—**आप्तवाक्यमिति** । आप्तपुरुषस्य वाक्यमेव प्रमाणशब्द इत्युच्यते, तथा च आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणस्य लक्षणम् । आप्तत्वं किमित्याह—**आप्तस्त्विति** । प्रयोगहेतुभूतवस्तुविषयकयथार्थज्ञानवत्त्वं आप्तस्य लक्षणम् । भवति च पित्रा कथिते 'पयसा सिञ्चतो'त्यत्र वाक्ये आप्तोच्चरितत्वम्, अथ च वाक्यत्वमपीति लक्षणसङ्गतिः । अत्र वाक्यत्वमात्रस्य लक्षणत्वे अनाप्तोच्चरितवाक्ये 'नद्यास्तीरे पञ्च फलानि सन्ती'त्यादावतिव्याप्तिरतः सत्यन्तम् । तन्मात्रोक्तौ 'जबगडदशादि'निरर्थकशब्देऽतिव्याप्तिरत उभयोरुपादानम् । वाक्यस्य लक्षणमाह—**पदसमूह इति** । पदसमूहत्वं वाक्यस्य लक्षणम् । उदाहरति—**यथा गामानयेति** । तथाचात्र गोपद–अम्पद–आनयपद–तिङ्पदरूपपदसमूहस्य सत्त्वाल्लक्षणसमन्वयः । ननु 'सुप्तिङन्तं पदम्' इति अनुशासनविरोध इति चेन्न । अस्माभिश्शक्तिमत एव पदवत्त्वस्वीकारात्, तथाचास्मन्मते 'घटः' इत्यपि पदं भवतीत्येवाह—**शक्तमिति** । पदपदार्थयोस्सम्बन्धश्शक्तिस्तन्निरूपकत्वं पदस्य लक्षणम् । शक्तिनिरूपकत्वमित्यत्र का नाम शक्तिरित्याह—**अस्माच्छब्दादिति** ।

**अत्रेदमवधेयम्**—शाब्दबोधे पदज्ञानं करणम्, पदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः, शाब्दबोधः फलम् । प्रथमं 'घट' इति पदं श्रूयते, ततो घटपदज्ञानजन्या घटपदार्थस्योपस्थितिः=स्मरणात्मकं ज्ञानं भवति, पदार्थोपस्थितौ च वृत्तिज्ञानं सहकारी, ततश्शाब्दबोधः 'अयं घटः' इत्याकारकः । वृत्तिर्नाम–सम्बन्धविशेषः, स च 'शक्ति–लक्षणान्यतररूपः' । तत्र ईश्वरेच्छा शक्तिपदार्थः, तदाकारश्च 'अस्माच्छब्दादयमर्थो बोद्धव्य' इति । घटादिशब्दात् घटादिरूपोऽर्थो बोद्धव्य इति तदर्थः । शक्यसम्बन्धो लक्षणा । यत्र शक्यार्थस्य बाधस्तत्रैव लक्षणा वृत्तिर्भवति, यथा—'गङ्गायां घोषः' इत्यादौ गङ्गापदशक्यार्थे प्रवाहे, घोषस्य=किरातसदनस्य बाधितत्वा-

त्तत्र लक्षणास्वीकारः । तत्र शक्यः=शक्त्याश्रयः अर्थः=प्रवाहपदार्थस्तस्यसम्बन्धस्तीरे सामीप्यत्वरूप इति तया गङ्गापदात्तीररूपार्थोपस्थितिस्तथा च'गङ्गायां घोषः' इति वाक्यजन्य. 'गङ्गातीरनिरूपितवृत्तितावत्किरातसदनमि'ति शाद्बबोध इति संक्षेप ।

यथार्थ ( सत्य ) बोलने वाले मनुष्य आप्त हैं, और उन्ही आप्तपुरुषों का वाक्य शब्द नामक प्रमाण है । पदों के समूह ( एकत्रित ) को वाक्य कहते हैं । जैसे-"गामानय" ( गाय लाओ ) इत्यादि वाक्य कहलाता है । जिसमें शक्ति हो वह पद कहलाता है 'इस पद से यह अर्थ समझना चाहिये' यह जो ईश्वरका संकेत (इच्छा) है उसी का नाम शक्ति है ।

वाक्यार्थज्ञाने के हेतवः ?

**आकाङ्क्षा-योग्यता-सन्निधिश्च वाक्यार्थज्ञाने हेतुः ।**

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा । अर्थाबाधो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः । तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा-'गौरश्वः पुरुषो हस्ती'ति न प्रमाणम्-आकाङ्क्षाविरहात् । 'वह्निना सिञ्चतीति न प्रमाणम्-योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणम्-सान्निध्याभावात् ॥**

वाक्यार्थज्ञाने=शाब्दबोध इत्यर्थ. । तत्र सहकारिकारणानि कानीत्याशङ्कायामाह—**आकांक्षेत्यादि** । आकांक्षाज्ञानम्, योग्यताज्ञानम्, सन्निधिज्ञानम्, शाब्दबोधे कारणमित्यर्थ., एभिर्विना शाद्बबुद्धेरनुदयादिति पर्यवसितोऽर्थः ।

तत्र का नाम आकाक्षा इति जिज्ञासायामाह—**पदस्येति** । यत्पदस्य=षष्ठयन्तराजापदस्य यत्पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्=पुरुषादिरूपपदान्तराभावप्रयोज्यशाद्बबोधाऽजनकत्वम्, तत्पदसमभिव्याहृततत्पदवत्त्वमेव आकांक्षापदार्थः। एवञ्च 'राज्ञः पुरुषः' इत्यत्र षष्ठयन्तराजपदसमभिव्याहृतं (समीपोच्चरितं) पुरुषपदवत्त्वमेवाकाक्षा तज्ज्ञानं तच्छाद्बबोधे ('राजसम्बन्ध्यभिन्नः पुरुषः' इति बोधे) हेतुः।तथाच-अव्यवहितोत्तरत्वसम्बन्धेन एकपदविशिष्टापरपदवत्त्वमाकांक्षाया लक्षणम्।

योग्यताया लक्षणमाह—**अर्थाबाध इति** । अर्थस्य अबाधो=बाधाभाव इत्यर्थ. । तथाच बाधाभावत्वं योग्यताया लक्षणम् ।

सन्निधिलक्षणमाह—**पदानामिति** । पदानाम्, अविलम्बेन=अचिरेण, उच्चारणं सन्निधिरित्यर्थः । ययोः पदयोः परस्परं शाब्दबोधजनकत्वे तात्पर्यं तयोः पदयोरव्यवधानं सन्निधिरासत्तिर्वेति भावः । तथाच अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानत्वं सन्निधेरासत्तेर्वा लक्षणम् ।

ननु किमर्थमेतेषां कारणत्वं कल्प्यत इत्यत आह—**तथाचेति** । अप्रमाणम्=शाब्दप्रमाजनकं नेत्यर्थः । एवञ्चाकाक्षाद्यभावाच्छाब्दबोधाभावात् येन विना यदनुपपन्नं तं प्रति तस्य कारणत्वकल्पनादन्वयव्यतिरेकाभ्यामेव ( आकांक्षादीनां शाब्दबोधे ) कारणत्वं कल्प्यत इति हृदयम् । किं तदाकाक्षादिरहितमप्रमाणं वाक्यमिति जिज्ञासायामाह—**यथा गौरश्व इति** । 'गौरश्व पुरुषो हस्ती'त्यादौ परस्परं पदयोराकांक्षाभावः स्फुट एव । एवं 'घटम्' इति वाक्यजन्यबोधे 'घटीयं कर्मत्वमि'तिरूपे घटपदोत्तरअम्पदवत्त्वमेवाकांक्षा, न तु घटः कर्मत्वमितिरूपमित्येदप्यनाकाक्षितोदाहरणं द्रष्टव्यम् । योग्यतारहितं वाक्यमुदाहरति—**वह्निना सिञ्चेदिति** । अत्र जलेनैव सेकसंभवात् वह्निकरणसेचनस्य बाधितत्वान्न शाब्दबोधः । सन्निधिरहितं वाक्यमुदाहरति—**प्रहरे प्रहर इति** । असहोच्चारितानि=पृथक् पृथक् उच्चरितानि, यत्र प्रातः गामित्युक्तम्, मध्यान्हे अत्र इत्युक्तम्, सायाह्ने आनय इत्युक्तम्, तत्र कालकृतासान्निध्यान्न शाब्दबोधः । इदमुपलक्षणम्—'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यादौ दैशिकमप्यसान्निध्यं बोध्यम् ।

**वाक्यार्थज्ञान ( शाब्दबोध ) में तीन प्रकारके हेतु हैं—आकांक्षा, योग्यता, और सन्निधि ।**

जिस पद में "पदान्तरव्यतिरेकप्रयुक्त" ( किसी दूसरे पद के अभावप्रयुक्त ) जो 'अन्वयाननुभावकत्व' अर्थात् शाब्दबोधाजनकता है, वही 'आकाङ्क्षा है । [ जैसे—'गामानय' इस वाक्यघटक जो 'गो' पद है उसका शाब्दबोध 'अम्' पद के विना नहीं होता, क्यों कि 'गो आनय' इस वाक्य से अर्थ प्रतीत होता ही नहीं है । तस्मात् 'गामानय' इस वाक्य के अर्थज्ञान ( शाब्दबोध ) में गोपदोत्तरअम्पदत्वरूप आकाङ्क्षा हेतु है ] ।

'अर्थाबाध' ( बाधाभाव ) योग्यता है । [ जैसे—"वह्निना सिञ्चति" ( आग से सींचता है ) यहां सिञ्चन करने की योग्यता आग में बाधित है, अतः इस वाक्य से शाब्दबोध नहीं होता, तस्मात् एक पदार्थमें दूसरे पदार्थका सम्बन्ध रहना ही योग्यता है । ]

पदों का अविलम्ब ( शीघ्रता से ) उच्चारण करना ही 'सन्निधि' है।

एवञ्च-आकाङ्क्षा, योग्यता और सन्निधि से रहित जो वाक्य है वह प्रमाण नहीं होता। जैसे-"गाय, घोड़ा, पुरुष, हाथी" यह वाक्य प्रमाण नहीं होता, क्योंकि इस वाक्य में पूर्वोक्त आकाङ्क्षा नहीं है, और 'आगसे सींचो' यह वाक्य भी प्रमाण नहीं है, क्योंकि इसमें पूर्वोक्त योग्यता नहीं है, एवं एक २ पहर के बाद ( पहले-'गाम्' तदुत्तर एक पहर के बाद-'आनय' ऐसा ) उच्चारण किये गये "गाम् आनय" इत्यादि पद भी प्रमाण नहीं हैं, क्योंकि इसमें सन्निधि नहीं है।

वाक्यं कतिविधम् ?

## वाक्यं द्विविधम्-वैदिकं-'लौकिकं च। वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्।

अर्थबोधकपदसमूहत्वरूपवाक्यस्य भेदानाह-**वाक्यं द्विविधमिति**। द्वैविध्यं दर्शयति—**वैदिकमित्यादिना**। ईश्वरोक्तत्वे सति वाक्यत्वं वैदिकवाक्यस्य लक्षणम्। नैयायिकमते वेदो हि भगवता प्रणीत.। वैदिकपदेन वेदमूलकानि स्मृत्यादीन्यपि ग्राह्याणि। वेदवाक्यभिन्नत्वे सति वाक्यत्वं लौकिकत्वम्। तल्लौकिकंद्विविधम्-आप्तोक्तम्, अनाप्तोक्तञ्चेतिभेदात्। तत्र, आप्तोक्तं प्रमाणम्=प्रमाणशब्द इत्यर्थः। अन्यत् = अनाप्तोक्तमप्रमाणमित्यर्थः।

वाक्य ( अर्थबोधकपदसमूह ) दो प्रकार का है-वैदिक और लौकिक। वैदिक ( वेद, स्मृति, पुराण, आदि से उक्त ) वाक्य ईश्वर के वाक्य हैं। अतः वे सभी वैदिक वाक्य प्रमाण हैं। लौकिक ( मनुष्य से उक्त ) वाक्य तो वे ही प्रमाण हैं, जो यथार्थवक्ता से उच्चरित हों, उससे अन्य ( मिथ्यावादियों से उक्त ) लौकिक वाक्य प्रमाण नहीं हैं।

शाब्दज्ञानं किम् ?

## वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं तु शब्दः॥

### इति शब्दखण्डम्।

---

एतावता ग्रन्थेन शाब्दबोधसामग्री प्रपञ्चिता, प्रमाविभागवाक्ये ('प्रत्यक्षानुमित्युपमितिशाब्दभेदादि'ति वाक्ये ) शाब्दप्रमाया अपि उद्दिष्टत्वात्सा कुतो न प्रदर्शितेत्यत आह-**वाक्यार्थज्ञानमिति**। शब्दप्रमाणमुपसंहरति **तदिति**। तत्करणम्=शाब्दज्ञानकरणं, शब्द =प्रमाणमित्यर्थः।

इति कमलायां शब्दखण्डम्।

वाक्यके अर्थको समझना ही शाब्दज्ञान है । उस शाब्दज्ञान ( शाब्दबोध ) का करण ( असाधारणकारण ) शब्द है । तस्मात् शब्द ही शब्द प्रमाण है ।

इस तरह 'इन्दुमती' नामक हिन्दी टीका में शब्दपरिच्छेद समाप्त हुआ ।

## अथाऽवशिष्टगुणनिरूपणम् ।

अयथार्थानुभवस्य कति भेदाः ?

### अयथार्थानुभवस्त्रिविधः—संशय-विपर्यय-तर्कभेदात् ।

### अथाऽवशिष्टगुणनिरूपणम् ।

गुणाऽवान्तरभेदनिरूपणप्रसङ्गे 'सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानमि'ति ग्रन्थेन बुद्धेर्लक्षणमुक्तम् , ततस्तद्भेदानुक्त्वा यथार्थानुभवरूपतद्भेदस्य प्रत्यक्षादिप्रकारेण चातुर्विध्यमुक्तम् , ततस्तत्करणनिरूपणद्वारेण प्रत्यक्ष-अनुमिति-उपमिति-शाब्दप्रमाणां लक्षणान्युक्तानि । एवं यथार्थानुभवप्रपञ्चानन्तरं इदानीं अयथार्थानुभवभेदानाह—**अयथार्थानुभवस्त्रिविध इति** । त्रैविध्यं दर्शयति—**संशयेत्यादिना** । संशय-विपर्यय-तर्कभेदेन अयथार्थानुभवस्त्रिविध इत्यर्थः ।

ननु अयथार्थानुभवस्य त्रैविध्यकथनमसङ्गतम् , स्वप्नरूपज्ञानस्य बाधितार्थविषयकस्यातिरिक्तस्यानुभवसिद्धत्वादिति चेन्न । विपर्यये तदन्तर्भावात् । स्वप्नस्य मानसविपर्ययरूपत्वादिति संक्षेप ।

संशय, विपर्यय और तर्क के भेद से अयथार्थ अनुभव तीन प्रकारका है ।

संशयस्य किं लक्षणम् ?

### एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः। यथा—स्थाणुर्वा पुरुषो वेति ।

तत्र संशयस्य किं लक्षणमित्यत आह—**एकस्मिन्निति** । एकस्मिन् धर्मिणि =एकस्मिन्नेव पुरोवर्त्तिनि पदार्थे विशेष्ये इति यावत् , विरुद्धाः =व्यधिकरणा , ये नानाधर्मा =स्थाणुत्व-पुरुषत्वादयस्तेषा वैशिष्ट्यं=सम्बन्धस्तदवगाहिज्ञानं संशय इत्यर्थः, तथाच एकधर्मावच्छिन्नविशेष्यकभावाऽभावप्रकारकज्ञानत्वं संशयस्य लक्षणम् । संशयमुदाहरति—**यथा स्थाणुर्वेति** । स्थाणुर्नाम=पर्णरहितो वृक्षदण्ड । अत्र 'यत्रयत्र पुरुषत्वं तत्र तत्र करचरणादिमत्त्वमि'ति व्याप्त्या पुरुषत्वव्याप्यकर-

चरणादिमत्त्वस्य, एवं स्थाणुत्वव्याप्यवृक्षकोटरत्वादेश्च विशेषस्य इदन्त्वावच्छिन्नेऽदर्शनादुभयसाधारणोच्चैस्तरत्वस्य अत्रादर्शना'च्चायं पुरुषः पुरुषत्वाभाववान् वा, अयं स्थाणुः स्थाणुत्वाभाववान् वे'त्याकारसंशये, एकधर्मावच्छिन्ने विशेष्ये इदन्त्वावच्छिन्ने पुरुषत्वपुरुषत्वाभाव—स्थाणुत्वस्थाणुत्वाभावरूपविरुद्धधर्मप्रकारकज्ञानत्ववत्त्वात् लक्षणसमन्वयः ।

तदुक्तम् 'स संशयो मतिर्या स्यादेकत्राभावभावयोरि'ति । अत्र एकस्मिन्निति पदानुपादाने 'घटपटावि'ति समूहालम्बनज्ञानस्य घटत्व–पटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिव्याप्तिरतस्तदुपादानम् । 'घटः पृथिवी'तिज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्व–पृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिव्याप्तिवारणाय विरुद्धेति । 'पटत्वविरुद्धघटत्ववान् घटः' इतिज्ञानेऽतिव्याप्तिवारणाय नानेति।

**एक विशेष्य में परस्पर विरुद्ध नाना धर्मका जो सम्बन्ध है, उसका जो ज्ञान वही संशय है। यथा–किसी एक 'विशेष्य' स्थाणु ( सूखा हुआ मुण्डा ) वृक्ष को देखकर उसमें सन्देह होता है, यह 'स्थाणु है अथवा पुरुष है' । यहां एकही स्थणुरूप विशेष्य में स्थाणुत्व–स्थाणुत्वाभाव तथा पुरुषत्व–पुरुषत्वाभावरूप विरुद्ध धर्मका अवगाहन ज्ञानमें है, अतः यह संशय ज्ञान हुआ ।**

विपर्ययः कः ?

## मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ 'रजतम्' इति ।

विपर्ययस्य लक्षणमाह—**मिथ्याज्ञानमिति** । अयथार्थज्ञानत्वं विपर्ययस्य लक्षणम् । विपर्ययमुदाहरति—**यथा शुक्तौ 'इदं रजतमि'ति** ।

मिथ्याज्ञान विपर्यय कहलाता है । यथा–सींपमें 'यह चांदी है' ऐसा ज्ञान ।

तर्कस्य किं स्वरूपम् ?

## व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा–यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ।

तर्कस्य लक्षणमाह–**व्याप्यारोपेणेति** । व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः, हेत्वभावो व्यापकः, आरोपो नाम = आहार्यज्ञानम् , तद्धि बाधकालीनेच्छाजन्यत्वरूपम् , यथा ह्रदो वन्ह्यभाववानितिबाधकालीना या इच्छा 'वन्ह्यभाववति ह्रदे वह्निज्ञानं मे जायतामि'तिरूपा तज्जन्यं ज्ञानं 'वन्ह्यभाववान् ह्रदो वह्निमान्' इति रूपं तदेवाहार्यज्ञानमित्यर्थः । तर्के हि आपाद्याभावनिश्चयः, आपाद्यापादकयोर्व्याप्तिनिश्च-

यश्च कारणम्। तथाच व्याप्यस्याहार्यज्ञानाद्व्यापकस्याहार्यज्ञानत्वं तर्कस्य लक्षणम्। उदाहरति—**यथेति**। अत्रेयं परिस्थितिः—वादिना पर्वतो वन्हिमान् धूमादित्यायुक्तम्, ततः प्रतिवादी व्यभिचारशङ्कां वदति, 'पर्वते धूमोऽस्तु वन्हिर्मास्त्वि'ति। तद्वारणाय च वादी तर्कप्रतिष्ठां करोति 'यदि पर्वते वह्निर्न स्यात्तदा धूमोऽपि न स्यादि'ति। अत एवोक्तम्–"तर्कः शङ्कानिवर्तकः" इति। अत्र वादी व्याप्यस्य वन्ह्यभावस्याहार्यज्ञानात् पर्वते व्यापकस्य धूमाभावस्याप्याहार्यत्वं स्थापयति, न चैतत्प्रतिवादी स्वीकर्तुं शक्तः, आपाद्याभावस्य=धूमाभावाभावस्य=धूमस्य पर्वते प्रत्यक्षीकरणात्, किन्तु व्यापकाभावात् व्यापकस्य = धूमाभावस्य अभावात् धूमवत्त्वात्, व्याप्यस्यापि=वन्ह्यभावस्यापि अभावो वह्निमत्त्वं सिद्ध्यति, आपाद्यापादकयोर्व्याप्तिनिश्चयात्, तेन च प्रतिबन्धकविघटनात् 'पर्वतो वह्निमानि'त्यनुमितिस्थैर्यमिति ध्येयम्।

व्याप्यके झूठे ज्ञान से व्यापक का मिथ्याज्ञान करना 'तर्क' कहलाता है। जैसे–'यदि आग न हो तो धूम भी न हो'। यहां पर वह्न्यभावरूप व्याप्य के आरोप (मिथ्या ज्ञान) से धूमाभावरूप व्यापक का आरोप (मिथ्या ज्ञान) होता है, अतः यह तर्क है।

स्मृतिः कतिविधा ?

## स्मृतिरपि द्विविधा—यथार्था अयथार्था च। प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था।

एतावत्पर्यन्तं ज्ञानैकभेदमनुभवं निरूप्येदानीमपरज्ञानभेदरूपां स्मृतिं विभजते—**स्मृतिरपि द्विविधेति**। द्वैविध्यमाह—**यथार्थेत्यादिना**। **प्रमाजन्येति**। प्रमाजन्यत्वं यथार्थस्मृतेर्लक्षणम्। **अप्रमेति**। अप्रमाजन्यत्वमयथार्थस्मृतेर्लक्षणम्। अनुभवस्य यथार्थत्वाऽयथार्थत्वाभ्या स्मृतेरपि यथार्थत्वाऽयथार्थत्वे इति भावः।

स्मृति भी दो प्रकार की होती है–यथार्थ और अयथार्थ। जो स्मृति यथार्थ–ज्ञान से उत्पन्न हो वह यथार्थ; और जो अयथार्थज्ञान से हो वह अयथार्थ स्मृति कहलाती है।

सुखस्य किं लक्षणम् ?

## सर्वेषामनुकूलवेदनीयं सुखम्।

सुखस्य लक्षणमाह—**सर्वेषामिति**। सर्वेषाम् = सर्वात्मनाम्, अनुकूल-

तया 'स्वर्गसुखं मेऽनुकूलम्' इति रूपेण, वेदनीयं=वेद्यं यत्तत्सुखमित्यर्थः। 'अहं सुखी'त्यनुभवसिद्धसुखत्वजातिमत्त्वं सुखस्य लक्षणम्'।

'सुख' वह है जो "सर्वेषाम्" अर्थात् इष्ट, मित्र, शत्रुवर्ग आदि सभी का प्रिय जनक हो।

दुःखस्य किं लक्षणम् ?

## प्रतिकूलवेदनीयं दुःखम् ।

दुःखस्य लक्षणमाह—**प्रतिकूलमिति** । प्रतिकूलतया='दारिद्र्यादिजं कष्टं मे प्रतिकूलमि'ति रूपेण, वेदनीयम्=वेद्यं यत्तद्दुःखमित्यर्थः । 'अहं दुःखी'त्यनुभवसिद्धदुःखत्वजातिमत्त्वं दुःखस्य लक्षणं बोध्यम् ।

'दुःख' वह है–जो सभी इष्ट, मित्र आदि का अप्रियजनक हो।

इच्छाद्वेषप्रयत्नानां कानि लक्षणानि ?

## इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः ॥

इच्छा निरूपयति—इच्छा=कामः अभिलाष इत्यर्थः। इच्छात्वजातिमत्त्वमिच्छाया लक्षणम् । इच्छा हि द्विविधा–फलेच्छा–उपायेच्छेतिभेदात् । फलविषयिणी या इच्छा साऽऽद्या। उपाय=साधनम्, तद्विषयिणी येच्छा सा परा=उपायेच्छेति ध्येयम् । द्वेषं निरूपयति—द्वेषो=क्रोधः कोप इत्यर्थः। द्वेषत्वजातिमत्त्वं द्वेषस्य लक्षणम् । प्रयत्नं निरूपयति—**कृतिरिति** । प्रयत्नत्वजातिमत्त्वं प्रत्यत्नस्य लक्षणं बोध्यम् । स च प्रयत्नस्त्रिविधः–प्रवृत्तियत्नः, निवृत्तियत्नः, जीवनयोनियत्नश्चेति भेदात् । इच्छाजन्यत्वे सति गुणत्वमाद्यस्य, द्वेषजन्यत्वे सति गुणत्वं द्वितीयस्य, जीवनादृष्टजन्यत्वे सति गुणत्वं तृतीयस्य च लक्षणं बोध्यम् ।

कामना का नाम इच्छा है । क्रोधका नाम द्वेष है । कृतिका नाम यत्न (उद्योग) है।

धर्मस्य अधर्मस्य च किं लक्षणम् ?

## विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्यस्त्वधर्मः ॥

धर्मस्य लक्षणमाह—**विहितेति** । वेदविहितकर्मजन्यत्वे सति गुणत्वं धर्मस्य लक्षणम् । यथा—अग्निहोत्रादिजन्यं पुण्यं धर्मपदार्थः। अधर्मस्य लक्षणमाह—**निषिद्धेति** । वेदनिषिद्धकर्मजन्यत्वे सति गुणत्वं अधर्मस्य लक्षणम् । यथा—कलञ्जभक्षणादिजन्यं पापम् अधर्मपदार्थः । एतावेव **अदृष्टमिति** कथ्येते ।

वेदादि धर्मग्रन्थोक्तविधि से विहित जो कर्म हैं उनसे उत्पन्न अदृष्टको 'धर्म' कहते हैं, और वेदादिप्रतिपदोक्तनिषिद्धकर्म से उत्पन्न अदृष्ट को 'अधर्म' कहते हैं।

आत्ममात्रविशेषगुणाः के ?

**बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या-ईश्वरस्य, अनित्या-जीवस्य ॥**

आत्ममात्रवृत्तिविशेषगुणाः के इत्याशङ्कायामाह—**बुद्धादयोऽष्टाविति** । बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्म-अधर्मा एते आत्ममात्रवृत्तिविशेषगुणाः । विशेषगुणत्वं हि साधर्म्यम् :—

'बुद्धादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ।
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ॥'

इति कारिकापठितानां गुणानाम् । तत्र आत्ममात्रवृत्तिविशेषगुणाः=पूर्वोक्ता एव । **बुद्धीच्छेति** । तत्रेति शेषः । तत्र = अष्टसु गुणेषु मध्ये, बुद्धि-इच्छा-प्रयत्नाश्च प्रत्येकं नित्य-अनित्यभेदेन द्विविधा इत्यर्थः । **नित्या इति** । ईश्वरवृत्तिबुद्धीच्छाप्रयत्ना नित्या इत्यर्थः । **अनित्या इति** । जीववृत्तिबुद्धीच्छाप्रयत्ना अनित्या इत्यर्थः ।

आत्माके विशेष गुण आठ हैं—बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म और अधर्म, इनमें से बुद्धि, इच्छा, और प्रयत्न ये तीनों दो दो प्रकार के हैं—नित्य और अनित्य । ईश्वर की बुद्धि, इच्छा, तथा प्रयत्न नित्य हैं, और जीवकी बुद्धि, इच्छा, तथा प्रयत्न अनित्य हैं ।

संस्कारः कतिविधः, तद्भेदाश्च किं स्वरूपाः ?

**संस्कारस्त्रिविधः—वेगो-भावना-स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः ॥**

इत्यवशिष्टगुणनिरूपणम् ।



संस्कारं विभजते—**संस्कारस्त्रिविध इति** । त्रैविध्यं दर्शयति—**वेग इत्यादिना** । तत्र वेगः=जवापरपर्यायः संस्कारः, स कुत्र वर्तत इत्याह—**पृथि-**

च्यादीति । पृथिवी-जल-तेज-वायु-मनःसु वेगाख्यः संस्कारो वर्तत इत्यर्थः । भावनां लक्षयति—**अनुभवेति** । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाख्य-संस्कारस्य लक्षणम् । संस्कारमात्रजन्यं ज्ञानं स्मृतिरित्यत्र संस्कारपदेन भावनाख्य-संस्कार एव गृह्यत इति स्मृतिहेतुत्वमस्ति, अथ च तादृशसंस्कारस्यानुभवजन्यत्वा-दनुभवजन्यत्वमप्यस्तीति लक्षणसमन्वयः । सत्यन्तपदानुपादाने आत्ममनःसंयो-गेऽतिव्याप्तिस्तस्य ज्ञानमात्रे हेतुत्वादतस्तदुपादानम् । तन्मात्रोक्तौ अनुभवध्वंसेऽ-तिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वादतः स्मृतिहेतुत्वपदम् । भावनाख्यसं-स्कारः कुत्र वर्तत इत्याह—**आत्ममात्रवृत्तिरिति** । भावनाख्यसंस्कार आत्मन्येव वर्तते नान्यत्रेति भावः ।

स्थितिस्थापकसंस्कारस्य लक्षणमाह—**अन्यथाकृतस्येति** । अन्यथाकृतस्य= पूर्वावस्थातो भिन्नामवस्थामानीतस्य वस्तुनः पुनः पूर्वावस्थास्थापकः संस्कारः स्थितिस्थापक इत्यर्थः । स कुत्र वर्तत इत्याह—**कटादिपृथिवीवृत्तिरिति** । आदिपदेन 'रबड' इत्यादीनां ग्रहणम् । तेषां हि आकृष्य दीर्घत्वं प्रापितानामपि पुनः संश्लेषो येन जायते स स्थितिस्थापक इत्यर्थः ।

अथ पूर्वावस्थास्थापको नाम—यथापूर्वसंयोगजनकक्रियाजनक एव, एवञ्च संयोगजनकक्रियाजनकत्वस्य वेगेनापि सम्भवाद्वृथा स्थितिस्थापकसंस्कारस्वीकार इति चेन्न । वेगस्य उत्तरदेशसंयोगमात्रजनकक्रियाजनकत्वात्पूर्वदेशसंयोगजनक-क्रियोत्पत्त्यर्थमन्यस्याऽऽवश्यकत्वेन स्थितिस्थापकसंस्कारस्य स्वीकारादिति संक्षेपः

इति कमलायामवशिष्टगुणनिरूपणम् ।

---

संस्कार तीन प्रकार के हैं—वेग, भावना और स्थितिस्थापक । इनमें पहला-संस्कार 'वेग' पृथिवी, जल, तेज, वायु और मन इन पांचों में है । द्वितीय-'भावनारूप' संस्कार यह है-जो अनुभव से उत्पन्न और स्मरणका कारण हो । यह भावना केवल आत्मा में ही रहती है । तृतीय-'स्थितिस्थापक' रूप संस्कार वह है, जिस संस्कार से दूसरी अवस्था में गयी हुई वस्तु पुनः अपनी अवस्था में आ जांय । यह संस्कार चटाई आदि पार्थिव पदार्थों में रहता है ।

[ जसे—चटाईको लपेट देने से यह चटाई के काम में नहीं आती और विस्तृत कर देने से वह अपनी अवस्था में आकर काम में आ जाती है । ]

इस प्रकार 'इन्दुमती' नामक हिन्दी टीका में अवशिष्ट 'गुणप्रकरण' समाप्त हुआ ।

---

# [४] अथ कर्मलक्षणप्रकरणम्।

कर्मणः किं लक्षणम्?

**चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम्। विप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्।**

इति कर्मनिरूपणम्।

## अथ कर्मनिरूपणम्।

कर्मणो लक्षणमाह—**चलनात्मकमिति**। चलनम् = क्रिया, सैव आत्मा = स्वरूपं यस्य तत् कर्म इत्यर्थः। कर्मत्वजातिमत्त्वं कर्मणो लक्षणम्। तत्कर्म उत्क्षेपणम्–अपक्षेपणम्–आकुञ्चनम्–प्रसारणम्–गमनमितिभेदेन पञ्चविधमित्युक्तपूर्वम्, इदानीं तेषां लक्षणान्याह—**ऊर्ध्वदेशेति**। ऊर्ध्वदेशसंयोगहेतुत्वे सति कर्मत्वं उत्क्षेपणस्य लक्षणम्। ऊर्ध्वं कन्दुकादेर्यत्प्रक्षेपणं तदुत्क्षेपणमिति गीयते। **अधोदेशेति**। अधोदेशसंयोगहेतुत्वे सति कर्मत्वं अपक्षेपणस्य लक्षणम्। नारिकेलादेरधोदेशे यत्प्रक्षेपणं तदपक्षेपणमिति कथ्यते। **शरीस्येति**। शरीरसन्निकृष्टसंयोगहेतुत्वे सति कर्मत्वम् आकुञ्चनस्य लक्षणम्। शीतकाले हस्तपादादीना मेलनाय यो व्यापारः क्रियते तदाकुञ्चनमित्युच्यते। **विप्रकृष्टेति**। विप्रकृष्टसयोगहेतुत्वे सति कर्मत्वं प्रसारणस्य लक्षणम्(१)। श्रमेण क्लिन्नस्य यद्धस्तपादादेः पृथक्-पृथक्तया विस्तरणं तत्प्रसारणमित्यभिधीयते। **अन्यत्सर्वमिति**। उत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्वं गमनस्य लक्षणम्। यथा देवदत्तस्य ग्रामार्थं यानं गमनमित्युच्यते।

इति कमलायां कर्मनिरूपणम्।

चलने-फिरने आदि क्रिया का नाम 'कर्म' है। ऊर्ध्वदेश (ऊपर भाग) में संयोग होने का कारण 'उत्क्षेपण' (ऊपर फेकना) है, और 'अधोदेश' (नीचे भाग) में

(१) इदं हि आपाततः—वक्रतासम्पादकं कर्म आकुञ्चनम्, ऋजुतासम्पादकं कर्म प्रसारणं बोध्यम्, तेन कटादिवृत्त्याकुञ्चनादेः शरीरसन्निकृष्टसंयोगाभावेऽपि न क्षतिरिति ध्येयम्।

संयोग होने का कारण 'अपक्षेपण' (नीचे फेकना) है, एवम् शरीर के समीप संयोगका कारण 'आकुञ्चन' ( समेटना ) है, तथा शरीर से दूर संयोग का कारण प्रसारण ( फैलाना ) है, इनसे भिन्न सभी कर्म गमन ( जाना ) कहलाता है ।

इस तरह 'इन्दुमती' टीका में कर्म-निरूपण समाप्त हुआ ।

## अथ सामान्यलक्षणप्रकरणम् ।

सामान्यस्य किं लक्षणम् ?

**नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता, अपरं द्रव्यत्वादि ॥**

इति सामान्यनिरूपणम् ।

### अथ सामान्यनिरूपणम् ।

सामान्यस्य लक्षणमाह—**नित्यमेकमिति** । नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणम् । अस्य लक्षणस्य समन्वयप्रकारश्च उद्देशप्रकरणे एव उक्तः । अत्र नित्यत्वे सतीति पदानुपादाने-संयोगसम्बन्धेऽतिव्याप्तिः, संयोगस्य गुणपदार्थतया द्रव्यद्वयनिष्ठत्वेन च तत्रानेकसमवेतत्वस्य सत्त्वादतस्तदुपादानम् । तथाच तस्य क्रियाजन्यत्वेन नित्यत्वाभावान्न दोषः । नित्यत्वमात्रोक्तौ—आकाशादावतिव्याप्तिरतोऽनेकसमवेतत्वमिति । तथाच आकाशादीनां सर्वत्र अवृत्तितया अनेकसमवेतत्वाभावान्नातिव्याप्तिः । अनेकपदानुपादाने—जलपरमाणुरूपादावतिव्याप्तिः, रूपस्य गुणपदार्थतया तस्य परमाणुरूपद्रव्ये समवायेनैव वर्तमानत्वेन तत्र समवेतत्वस्य, नित्यगततया नित्यत्वस्यापि सत्त्वादतस्तदुपादानम् । तथाच जलपरमाणौ समवेतत्वसत्त्वेऽपि तत्परमाणुमात्रसमवेततया अनेकसमवेतत्वाभावान्न दोषः । समवेतपदं निष्कास्य नित्यत्वे सति अनेकवृत्तित्वमित्युक्तौ—अत्यन्ताभावेऽतिव्याप्तिः, तस्य नित्यत्वाद्घटपटादिष्वनेकेषु वर्तमानत्वाच्चातस्समवेतत्वमिति, तथाच अत्यन्ताभावस्य सर्वत्र स्वरूपसम्बन्धेनैव वर्तमानतया समवायेन वृत्तिमत्त्वरूपसमवेतत्वस्य तत्रासत्त्वान्नातिव्याप्तिरिति । सामान्यं कुत्र वर्तत इत्याह—**द्रव्यगुणकर्म-**

वृत्तीति। पूर्वप्रदर्शितं परसामान्यं किमित्याह—सत्तेति। अपरमिति। अपरसामान्यं द्रव्यत्वादिकं बोध्यम्। आदिपदेन पृथिवीत्वादेः परिग्रहः।

इति कमलायां सामान्यनिरूपणम्।



'सामान्य' वह है—जो नित्य और एक होता हुआ नाना पदार्थोंमें रहे। वह सामान्य (जाति) द्रव्य, गुण और कर्म में रहता है।

सबसे अधिक देशमें व्यापक होकर रहने वाली जाति सत्ता है। द्रव्यत्व आदि जाति सत्ता से कम देश में रहती है इसलिये व्याप्य हैं।

इस प्रकार 'इन्दुमती' हिन्दी टीका में सामान्य-निरूपण समाप्त हुआ।



## अथ विशेषलक्षणप्रकरणम्।

विशेषाणां किं लक्षणम्?

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥**

इति विशेषनिरूपणम्।



### अथ विशेषनिरूपणम्।

विशेषस्य लक्षणमाह—**नित्यद्रव्येति**। स्वतोव्यावर्तकत्वं विशेषाणां लक्षणम्। विशेषपदार्थस्वीकारे युक्तिप्रदर्शनमिषेण लक्षणसमन्वयप्रकारश्चायं बोध्यः—घटादित आरभ्य द्व्यणुकपर्यन्तं परस्परं (अयं घटस्तद्घटाद्भिन्नः, अयं कपालस्तत्कपालाद्भिन्न इति) भेदसाधने तत्तदवयवसमवेतत्वादिति हेतुरुपन्यसितुं शक्यः, यदा च परमाणुषु परस्परं भेदः साध्यते (अयं परमाणुस्तत्परमाणुतो भिन्न इति) तदा तत्तदवयवसमवेतत्वादिति हेतुर्न दातुं शक्यते परमाणूनां निरवयवत्वेनावयवसमवेतत्वाभावात्तदर्थं प्रत्येकस्मिन् परमाणौ एकैको विशेषः स्वीक्रियते, तथाच परमाणुषु प्रत्येकं वर्तमाना विशेषा एव तयो (परमाण्वोः) र्भेदसाधनाय प्रभवन्ति, अयं परमाणुस्तत्परमाणुतो भिन्न एतत्परमाणुगतविशेषादिति च तदनुमानम्। इयमेव विशेषपदार्थस्वीकारे युक्तिः, परमाणूनां नित्यद्रव्याणाञ्चान्येषां नानात्वाद्विशेषाणामपि नानात्वं बोध्यम्। ततः परं विशेषेषु परस्परं भेदसाधने 'अयं विशेषस्तद्विशेषाद्भिन्नः' इत्यादौ

हेतूपन्यासार्थं विशेषान्तरस्वीकारे तत्रापि भेदसाधनाय पुनरेव विशेषान्तरापेक्षेत्यादिक्रमेणानवस्था स्यादतो विशेषाः स्वतोव्यावर्तका इति द्रष्टव्यम् ।

तथाथ अयं विशेषस्तद्विशेषाद्भिन्नः विशेषादिति स्वस्वरूपेणैव हेतुना स्वस्येतरस्माद्व्यावृत्तिकरणेन विशेषे स्वतोव्यावर्तकत्वरूपलक्षणसमन्वयः स्फुट एवेति ध्येयम् ।

नवीनास्तु—या गतिर्विशेषाणां परस्परभेदसाधनेऽऽश्रियते सैव परमाणूनां परस्परं भेदसाधनावसरे स्वीक्रियताम् , एवञ्च परमाणूनामेव स्वतो व्यावर्तकत्वं स्यात् , तथा च विशेषाख्यपदार्थान्तरस्वीकारे प्रमाणाभाव इति प्राहुः ।

इति कमलायां विशेषनिरूपणम् ।

---

'विशेष' वह है जो नित्य द्रव्यों में रहते हुए दूसरों को व्यावृत्त करें ।

इस तरह 'इन्दुमती' टीका में विशेष-निरूपण समाप्त हुआ ।

---

## अथ समवायलक्षणप्रकरणम् ।

समवायस्य किं लक्षणम् ?

**नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा— अवयवा-वयविनौ, गुण-गुणिनौ, क्रिया-क्रियावन्तौ, जाति-व्यक्ती, विशेष-नित्यद्रव्ये चेति ।**

इति समवायनिरूपणम् ।

---

### अथ समवायनिरूपणम् ।

समवायस्य लक्षणमाह—**नित्यसम्बन्ध** इति । नित्यत्वे सति सम्बन्धिभिन्नत्वे सति सम्बन्धत्वं समवायस्य लक्षणम् । अत्र सम्बन्धत्वमात्रोक्तौ संयोगादावतिव्याप्तिरतो नित्यत्वे सतीति । नित्यत्वमात्रोक्तौ आकाशादावतिव्याप्तिरतस्सम्बन्धत्वमपीति । एवं सत्यपि—स्वरूपसम्बन्धेऽतिव्याप्तिस्तस्य नित्यत्वात्सम्बन्धत्वाच्चातः

सम्बन्धिभिन्नत्वे सतीति। तथात्र स्वरूपसम्बन्धस्य लाघवात्प्रतियोग्यनुयोगिरूप-सम्बन्धिस्वरूपतया सम्बन्धिभिन्नत्वाभावान्न दोष इति। समवायः कुत्र वर्तत इत्याह—**अयुतसिद्धवृत्तिरिति**। अयुतसिद्धौ कावित्याह—**ययोरिति**। ययोर्द्वयोः=पदार्थयोर्मध्ये, एकमविनश्यत् = एकपदार्थो नाशं यावदपरपदार्थाश्रितमेव तिष्ठति, तौ पदार्थौ अयुतसिद्धौ। अयुतसिद्धपदार्थानाह—**यथेति**। अवयवावयविनौ= अवयवः = हस्तपादादिः, अवयवी=शरीरञ्च तौ, गुणगुणिनौ = गुणः=घटरूपादिः गुणी=घटश्च तौ, क्रियाक्रियावन्तौ = क्रिया = गमनादिः, क्रियावन्तः = पुरुषस्तौ, जातिव्यक्ती=जातिः=ब्राह्मणत्वम्, व्यक्तिः=ब्राह्मणस्तौ, विशेषनित्यद्रव्ये=विशेषः = विशेषपदार्थः, नित्यद्रव्यम्=आकाशादिस्तावेवावयुतसिद्धौ बोध्यौ। तथाचैतयोरेव समवायः सम्बन्धो भवतीति ध्येयम्(१)।

इति कमलायां समवायनिरूपणम्।

---

नित्य सम्बन्धका नाम समवाय है। यह समवायसम्बन्ध अयुतसिद्धपदार्थोंमें रहता है। जिन दोंमें एक पदार्थ, जबतक वह नष्ट न हो जाय तब तक परस्पर एक दूसरेके बिना न रह सके वे ही दोनों अयुतसिद्ध हैं। जैसे—अवयव और अवयवी, गुण और द्रव्य, क्रिया और द्रव्य, जाति और व्यक्ति, नित्यद्रव्य और विशेष।

इस तरह 'इन्दुमती' में समवाय-निरूपण समाप्त हुआ।

---

## अथाऽभावलक्षणप्रकरणम्।

प्रागभावस्य किं लक्षणम्?

### अनादिः सान्तः प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य।

#### अथाऽभावनिरूपणम्।

प्रागभावस्य लक्षणमाह—**अनादिरिति**। उत्पत्तिरहितत्वे सति नाशवत्त्वं

---

(१) समवायसम्बन्धस्य अनुमानेन सिद्धिः, तथाहि—गुणक्रियादिविशिष्ट-बुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् 'दण्डी पुरुषः' इति विशिष्ट-बुद्धिवदित्यनुमानेन इतरबाधसहकारात्परिशेषेण समवायसम्बन्धसिद्धिरिति।

प्रागभावस्य लक्षणम् , 'इह घटो भविष्यती'ति प्रतीतिसिद्धोऽभावः प्रागभाव इति तु उक्तपूर्वम् । इयं हि प्रतीतिः घटोत्पत्तेः पूर्वं कदा प्रभृति समागतेति ज्ञातुमशक्यत्वेन तत्र उत्पत्तिरहितत्वस्य घटोत्पत्त्यनन्तरञ्च तन्नाशान्नाशवत्त्वस्यापि सत्त्वाल्लक्षण-समन्वयः । अत्र उत्पत्तिरहितत्वमात्रोक्तौ—नित्येऽतिव्याप्तिः, नाशवत्त्वमात्रोक्तौ च घटादावनित्येऽतिव्याप्तिरित्युभयोरुपादानम् । प्रागभावः कस्मिन्काले वर्तत इत्याह— **उत्पत्तेरिति** । कार्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे वर्तत इत्यर्थः । तदाकारश्च 'इह घटो भविष्यती'ति ।

'प्रागभाव' वह कहलाता है जिस अभाव की उत्पत्ति नहीं होती हो पर अन्त ( नाश ) होता हो, जैसे—घटादि कार्यों की उत्पत्ति के पहले जो उनका अभाव, हैं, वह 'प्रागभाव' है, क्योंकि इसकी उत्पत्ति नहीं होती, किन्तु घटादिकार्योत्पत्तिके बाद उसका नाश हो जाता है ।

प्रध्वंसाभावस्य किं लक्षणम् ?

**सादिरनन्तः प्रध्वंसः, उत्पत्त्यनन्तरं कार्यस्य ।**

प्रध्वंसाभावस्य लक्षणमाह—**सादिरिति** । उत्पत्तिमत्त्वे सति नाशरहितत्वं प्रध्वंसाभावस्य लक्षणम् । 'घटध्वंसो जातः' इति प्रतीत्या ध्वंसे उत्पत्तिमत्त्वस्य ध्वंसस्य पुनर्ध्वंसकरणे घटोन्मज्जनापत्तिरिति भिया तत्र नाशरहितत्वस्य च सत्त्वाल्लक्षणसङ्गतिः । अत्र—उत्पत्तिमत्वस्य लक्षणत्वे घटादावतिव्याप्तिः, नाशरहितत्वमात्रस्य तथात्वे नित्येऽतिव्याप्तिरत उभयोरुपादानम् । **उत्पत्तीति** । कार्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः । तदाकारश्च 'घटो ध्वस्तः' इति ।

'प्रध्वंसाभाव' वह कहलाता है जिस अभाव का आदि ( उत्पत्ति ) हो लेकिन अन्त ( ध्वंस ) नहीं होता हो । जैसे—घटादि कार्यों की उत्पत्तिके पश्चात् जो अभाव है वह 'प्रध्वंसाभाव' है, क्योंकि घटादि कार्योत्पत्तिके बाद घटाभाव उत्पन्न होता है, किन्तु इसका अन्त नहीं होता ।

अत्यन्ताभावस्य किं लक्षणम् ?

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा— 'भूतले घटो नास्ती'ति ।**

अत्यन्ताभावस्य लक्षणमाह—**त्रैकालिकेति** । सम्बन्धावच्छिन्नेत्यादेः

संसर्गाभावत्वे तात्पर्यम्, त्रैकालिकपदञ्च नित्यपरम्, एवञ्च नित्यत्वे सति संसर्गाभावत्वम्–अत्यन्ताभावस्य लक्षणम् । अभावो हि द्विविधः–संसर्गाभावोऽन्योन्याभावश्चेति भेदात् । अन्योन्याभावभिन्नत्वे सति अभावत्वं संसर्गाभावस्य लक्षणम् । संसर्गाभावोऽपि त्रिधा–प्रागभाव–प्रध्वंसाभाव–अत्यन्ताभावभेदात्, तत्र प्रथमद्वितीयावनित्यौ, तृतीयश्च नित्य इति नित्यत्वे सति संसर्गाभावत्वस्य तत्र सत्त्वाल्लक्षणसमन्वयः । अत्र ध्वंसप्रागभावेऽतिव्याप्तिवारणाय नित्यत्वे सतीति बोध्यम् । तदाकारं दर्शयति—**यथेति** ।

'अत्यन्ताभाव' वह कहलाता है, जिस अभावकी प्रतियोगिता संसर्गसे अवच्छिन्न (युक्त) हो तथा जो भूत, भविष्यत् और वर्तमान इन तीनों काल में रहता हो । जैसे—"भूतले घटो नास्ति" (पृथिवी पर घड़ा नहीं है) इस तरह का अभाव ।

अन्योन्याभावस्य किं लक्षणम् ?

## तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः, यथा—'घटः पटो ने'ति ।

### इत्यभावनिरूपणम् ।



अन्योन्याभावस्य लक्षणमाह—**तादात्म्येति** । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं अन्योन्याभावस्य लक्षणम् । अन्योन्याभावाकारं दर्शयति—**यथेति** । अत्र 'घटः पटो न' इत्यत्र तादात्म्यसम्बन्धेनैव घटप्रतियोगिको भेदः पटे बोध्यत इति तादृशाभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया लक्षणसङ्गतिरिति ।

इति कमलायामभावनिरूपणम् ।



'अन्योन्याभाव' वह कहलाता है जिसकी प्रतियोगिता तादात्म्यसम्बन्ध से अवच्छिन्न (युक्त) हो । जैसे—"घटो न पटः" (घड़ा कपड़ा नहीं है) इस तरह का अभाव ।

इस तरह 'इन्दुमती' में अभाव-निरूपण समाप्त हुआ ।



पदार्थानुपसंहरति—

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ॥**

ननु न्यायदर्शने 'प्रमाण–प्रमेये'त्यादिसूत्रेण षोडशपदार्था उक्तास्तत्कथं सप्तैव पदार्था इत्यत आह–**सर्वेषामिति** । सर्वेषां षोडशपदार्थानामन्येषां शक्तिसादृश्यादीनाञ्चात्रैव यथायथमन्तर्भावो यस्मात् भवति, तस्मादित्यर्थः । **सप्तैव पदार्था इति** । प्रतिज्ञावाक्यमिदमनूद्य ग्रन्थं परिसमापयतीति तत्त्वम् ।

न्यायदर्शनशास्त्र में १६ पदार्थ हैं उन सभी पदार्थों का अन्तर्भाव पूर्वोक्त द्रव्य आदि सात हीं पदार्थों में हो जाता हैं, अतः सात ही पदार्थ सिद्ध हैं ।

[ १६ पदार्थ ये हैं—१ प्रमाण, २ प्रमेय ३ संशय, ४ प्रयोजन, ५ दृष्टान्त, ६ सिद्धान्त ७ अवयव, ८ तर्क, ९ निर्णय, १० वाद, ११ जल्प, १२ वितण्डा, १३ हेत्वाभास, १४ छल, १५ जाति, और १६ निग्रहस्थान ]

**कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसङ्ग्रहः ॥**

**इति श्रीमहामहोपाध्याय–अन्नम्भट्टविरचितस्तर्कसंग्रहः समाप्तः ।**

---

**अन्वयः**—कणादन्यायमतयोः, बालव्युत्पत्तिसिद्धये, विदुषा, अन्नम्भट्टेन, तर्कसंङ्ग्रहः, रचितः ( अस्ति ) ॥ १ ॥

**कणादेति०** ।

**अर्थः**—कणादमतञ्च न्यायमतञ्च कणादन्यायमते तयोः, कणादमतम्=वैशेषिकमतम् , न्यायमतम्=गौतममतम् तयोः, बालानाम्=पूर्वोक्तानाम् , व्युत्पत्तिः= सप्तपदार्थज्ञानं तस्याः सिद्धये = प्राप्त्यै, विदुषा = प्रकृतविषये यथार्थज्ञानवता, अन्नम्भट्टेन=अन्नम्भट्टनामकेन, मयेति शेषः, तर्कसङ्ग्रहः=तर्कसङ्ग्रहनामा ग्रन्थः, रचितः=विरचितः अस्तीति भावः ।

गुरुवाक्यानुसारेण व्याख्यातस्तर्कसङ्ग्रहः।
कर्मणाऽनेन जगतः प्रीयेतां पितरौ सदा ॥ १ ॥

इति श्रीमल्लक्ष्मीनृसिंहसेवापरायण–वैजापुरकरान्वयावतंस–वैद्यराज–पण्डितप्रवर–नरहरिशास्त्रितनुजनुषा–नैयायिक–गोविन्दशर्मणा कृता सटिप्पणा कमलाख्या तर्कसङ्ग्रहव्याख्या समाप्तिमगात् ॥



कणाद ( वैशेषिक ) और न्याय ( गौतम ) के मतों में बालकों को सुखसे प्रवेश होने के लिये विद्वान् अन्नंभट्ट ने इस तर्कसंग्रह नामक ग्रन्थको बनाया।

इस प्रकार व्याकरणाचार्य पण्डित श्रीरामचन्द्रझा द्वारा अनुदित 'इन्दुमती' नामक हिन्दी टीका में 'तर्कसंग्रह' नामक ग्रन्थ समाप्त हुआ।



# अथ परिशिष्टम् (क)।

## पाश्चात्यन्यायशास्त्र ( Logic ) के अनुसार हेतुदोषों का साधारण-दिग्दर्शन।

हेतुदोषों को जानने के पूर्व ये बातें जान लेनी बहुत जरूरी है।

( १ ) ये लोग न्यायशास्त्र को दो तरह से विभक्त करते हैः—एक ( Deductive Logic ) 'डिडेक्टिव्ह लॉजिक' अर्थात् निगमनात्मक तर्क और दूसरा ( B ) ( Inductive Logic ) 'इण्डक्टिव्ह लॉजिक' अर्थात् आगमनात्मक तर्क इस भेद से।

( २ ) इनके मत से अनुमिती का क्रमः—ये दो वाक्यो से अनुमिति मानते हैः, पहिला वाक्य, जिसे ये लोग सामान्यवाक्य कहते है, 'मनुष्य मरणशील है' यह है। दूसरा वाक्य जो कि विशेषवाक्य कहा जाता है वह 'राजा मनुष्य है' यह है। इन्ही दो वाक्यों से, बाद में 'राजा भी मरणशील है' यह अनुमिति होती है, यही न्यायशास्त्र के प्रथमविभाग में विशेषत. विवेचित है। परन्तु 'मनुष्य जो है, वह मरणशील है' इसका परस्पर कैसे कार्य–कारणभाव है? और वह हो सकता है या नहीं, इत्यादि का विचार द्वितीयविभाग में ही किया गया है।

( ३ ) प्रकृत में अपने को उसी दूसरे विभाग से ही आवश्यकता है, क्यों कि हेतू का परीक्षण इसी में मिलता है। लेखक ने इनके प्रायः सभी हेतुपरीक्षण के उपायों को देखा, तथा व्याप्ती के दोष भी देखें, परन्तु पौर्वात्यन्यायशास्त्र के अनुसार वर्गीकरण का प्रकार इनके शास्त्र में ठीक तरह नहीं दिखता। इनके तर्क के कई दोषअपने यहां के छल, जाति, निग्रहस्थान आदि में ही अन्तर्भूत हो जाते हैं; अतः हेत्वाभास के निरूपण प्रसंग में उनका निरूपण वृथा जान कर उन्हें न देते हुए, जो कि साक्षात् हेतू के दोष हो सकते है, उन्ही का यहां संक्षेप में संग्रह किया जाता है।

इनका प्रथम दोष यह हैः—'Post Hoc Ergo propter Hoc' 'पोस्ट हॉक् एर्गो प्रॉपटर् हॉक्'।

**इसके चार भेद है।**

( A ) पहिले की परिभाषाः—

जिसके पीछे वह कार्य हुआ उस कार्य के प्रति, पहिले रहने वाले को कारण मानना ।

जैसे किः—मार्ग में चलते वक्त विघ्न आया तो उस विघ्न के प्रति काली बिल्ली के रास्ता काटने को कारण मानना । उस वाक्य का आकार, 'जहां विघ्न रहता है वहां बिल्ली का रास्ता काटना है'' यह है ।

दूसरा उदाहरणः—ताड़ के वृक्ष पर काक बैठा और ताड़ गिर पड़ा । यहा ताड़ के गिरने में काक के बैठने को कारण मानना यह दोष है; 'जहां २ ताड़ का पेड़ गिरता है वहां २ काक का बैठना है' यह उसका आकार है ।

२ ( B ) दूसरे की परिभाषाः—

जहाँ कारणसामग्री कार्य के प्रति हेतू है, पर उनमें से एक ही कारण को उस कार्य के प्रति कारण मानना ।

जैसेः—नेपोलिअन् की अवनती का कारण, उस की रूस पर चढ़ाई को मानना । यहां केवल उसकी चढ़ाई मात्र से अवनती मानना ठीक नहीं, क्यों कि अवनती के फूट आदि भी अन्य कारण हो सकते है ।

जैसे कि दूसरी जगह–कोई सीढी पर से गिरा और मर गया । यहा सीढ़ी से गिरना ही मरण का कारण है यह मानना दोष है ।

३ ( C ) तीसरे की परिभाषाः—

साथमें रहने वाले जितने सिद्धान्त हों उन्हें प्रत्येक को कारण या कार्य मानना ।

जैसेः—किसी ने हाथ मे डोरा बांधा और अन्य दूसरे ने बांधा नही, पहिला किसी महान् आपत्ती से बचा दूसरा बचा नहीं, तो पहिले के आपत्ती से बचने मे डोरे को कारण मानना । जैसे दूसराः—रूपप्रागभाव को पाकजगन्ध के प्रति कारण मानना ।

४ ( D ) चौथे की परिभाषाः—

परस्पर कार्यों मे ही एक को कारण मानना । जैसेः—'आज गर्मी क्यों होती है, ऐसा किसी के पूछने पर उसका कारण, टेम्परेचर् ( पारा ) का बढ़ जाने को बताना । यहां उष्णता का गर्मी और टेंपरेचर् बढ़ना दोनों कार्य है ।

दूसरा हेतुदोष यह है:—

'Fallacies of Generalisation or Illicit Generalisation' ( फॅल्सिज् ऑफ् जनरलाइजेशन् ऑर् इलिसिट् जनरलाइजेशन् )।

इसकी परिभाषाः—सम्पूर्ण उदाहरणों को न देख केवल एक उदाहरण से ही व्याप्ति मानना। जैसेः—कोई परदेशी नये देश में आया, वहाँ उसे प्रथम ही एक दो लफंगों से पाला पड़ा तव उसको यह निश्चय हुआ कि सारे शहर के लोग लफंगे हैं, यह मानना दोष है। जैसे दूसराः–कई हंसों को सफेद देख सब हंस सफेद रहते हैं यह मानना। पर यह ठीक नहीं। काले पीले भी कोई २ हंस हुआ करते हैं। अस्तु।

नोटः—अपने यहां व्यभिचार में इनका समावेश हो सकता है। यही इनकी हेत्वाभास की प्रणाली है। इन पाश्चात्यसिद्धान्तों के साधारण–दिग्दर्शन से अगर जिज्ञासुओं का कुछ भी लाभ हुआ तो लेखक अपने को कृतार्थ समझेगा। शुभम्।



## परिशिष्टम् ( ख ) को० क्र० १

### अथ तर्कसङ्ग्रहस्थपदार्थानां वंशपरम्परासूचकानि कोष्टकानि ।

पदार्थः

| १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|
| द्रव्यम् | गुणः | कर्म | सामान्यम् | विशेषः | समवाय. |
| * | * | १ उत्क्षेपणम्<br>२ अपक्षेपणम्<br>३ आकुञ्चनम्<br>४ प्रसारणम्<br>५ गमनम् | १ परम्<br>२ अपरम् | अनन्ताः | × |

१ प्र
२ प्र
३ अ
४ अ

* द्रव्यस्य गुणस्य च परम्परा क्रमेण को० क्र० २, तथा को० क्र० ३ ·

## परिशिष्टम् ( ख ) को० क्र० २

द्रव्यम्

| २ | ३ | ४ | ५ |
|---|---|---|---|
| जलम् | तेजः | वायुः | आकाशः |
| नित्यम्, अनित्यम् | नित्यम्, अनित्यम् | नित्यः, अनित्यः | × |
| अनित्यम् → शरीरम्, इन्द्रिमम्, विषयः | अनित्यम् → शरीरम्, इन्द्रिमम्, विषयः | अनित्यः → शरीरम्, इद्रियम्, विषयः | |

(left edge, partial:) नित्या → …द्रियम्, विषयः

(right edge, partial:) १३। · ३ पं० · ाम्– · ४२ · न्य– · स्व्या

॥ श्रीः ॥

# ( ग ) परिशिष्टम्

## अथ काशीस्थ-राजकीयसंस्कृतपाठशालीयपरीक्षापाठ्य—
## तर्कसंग्रहस्य
## 'सोत्तरो' विगताब्दीयप्रश्नपत्रसङ्ग्रहः(१)।

### १९२७

(१) आत्ममनसी निरूपणीये। (पृ० ११ पं० २६।पृ० १२ पं० १९)

(२) वाक्यस्य पञ्चावयवा निरूपणीयाः। (पृ० ४० पं० ८)

(३) कतिविधोऽसिद्धस्तस्य लक्षणं लेखनीयम्। (पृ० ५२ पं० ४।पं० ६)

(४) वाक्यार्थज्ञाने सोदाहरणहेतवो निरूपणीयाः। (पृ० ६० पं० ११।पं० १२)

---

### १९२८

(१) वायुः कतिविधः, किञ्च तस्य लक्षणमेतत्सर्वमुपपाद्यताम्। (पृ० ९ पं० १३। पं० १८। पं० १४)

(२) संशय-विपर्यय-तर्काणां लक्षणानि लिख्यन्ताम्। (पृ० ६३ पं० २७।पृ० ६४ पं० १९। पृ० ६५ पं० २)

(३) यथार्थानुभवस्य किं लक्षणम्। (पृ० २३ पं० २८, वा पृ० २४ पं० २३)

(४) व्याप्यत्वासिद्धस्य लक्षणं प्रदर्श्यताम्। (पृ० ५४ पं० ५)

(५) स्मृतिः कतिविधेति सविस्तरमुपपाद्यताम्। (पृ० ६५ पं० १७। स्मृतिलक्षणम्- पृ० २२ पं० ३०)

(६) लिङ्गं कतिविधमिति सविस्तरं प्रपञ्च्यताम्। (पृ० ४१ पं० १४।पं० १९, पृ० ४२ पं० ११, पं० २८)

(७) कर्म कतिविधम्, किञ्च तस्य लक्षणम्। (पृ० ४ पं० ६।पं० ७,वा पं० १२ [द्रव्य-गुणभिन्नत्वे-सतीति ]

---

( १ ) अत्र 'पृ०' इति संकेतेन पृष्ठसंख्या, 'पं०' इति संकेतेन च पंक्तिसंख्या ज्ञेया। यत्र मध्ये 'पृ०' पं० सं० नास्ति तत्रस्थमक्षरजातमेवोत्तरमिति। सम्पा०।

१६२६

(१) तेजसः किं लक्षणम् ? कतिविधञ्च तत् । (पृ० ८ पं० २२।पं० १६)

(२) स्पर्शः कतिविधः, किञ्च तस्य लक्षणम् । (पृ० १५ पं० २२।पं० २६)

(३) परत्व-मपरत्वञ्च कतिविधम् । (पृ० १९ पं० २२)

(४) प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः कतिविधः ? (पृ० ३२ पं० ८)

(५) हेत्वाभासाः के, कानि च तदुदाहरणानि ? (पृ० ४५ पं० ५। पं० १४, पृ० ४६ पं० २१, ३०, पृ० ४८ पं० ३, पृ० ४९ पं० ३, २०, पृ० ५० पं० १९, पृ० ५२ पं० ४, १३, पृ० ५३ पं० ३, २०, पृ० ५५ पं० ३० )

(६) संस्कारः कतिविधः । (पृ० ६७ पं० २१।पं० २८, पृ० ६८ पं० ३, पृ० ६७ पं० २३)

(७) समवायस्य किं लक्षणम् । (पृ० ७२ पं० २४)

१६३०

(१) असमवायिकारणस्य किं लक्षणम् , उदाहरणद्वारा तत्प्रदर्श्यताम् । (पृ० २९ पं० ३, वा १०।पं० ४) १०

(२) प्रत्यक्षस्य किं लक्षणम् ? कतिविधञ्च तत् । (पृ० ३० पं० २४।पृ० ३१ पं० ८) १५

(३) अनुमानं कतिविधम् ?, किञ्च तस्य लक्षणम् ? विशदीकृत्य प्रदर्श्यताम् । (पृ० ३८ पं० ७।पृ० ३९ पं० ११।पृ० ३४ पं० २८) १५

(४) तर्कस्य किं लक्षणम् । (पृ० ६५ पं० २) १५

(५) वाक्यं कतिविधम् । (पृ० ६२ पं० १०) १५

(६) धर्मा-धर्मयोर्लक्षणमभिधीयताम् । (पृ० ६६ पं० २६।पं० २८) १५

(७) आत्ममात्रविशेषगुणाः के । (पृ० ६७ पं० ५) १५

१६३१

(१) संख्यायाः परिमाणस्य लक्षणं विभागश्च सविस्तरमुपपाद्यताम् । (पृ० १७ पं० १२, १८, पृ० १८ पं० ७, १० ) १५

(२) केवलान्वयिनो लक्षणं सोदाहरणमभिधीयताम् । (पृ० ४२ पं० १४।पं० ११) १५

(३) पक्ष-सपक्ष-विपक्षाणां कानि लक्षणानि। (पृ० ४३ पं० २६।पृ० ४४ पं० १३।पं० २३) १५

(४) स्वरूपासिद्धहेत्वाभासस्य बाधहेत्वाभासस्य च किमुदाहरणम् । (पृ० ५३ पं० १०।पृ० ५६ पं० ११) १५

(५) उत्क्षेपणा-पक्षेपणा-कुञ्चन-प्रसारणानां लक्षणानि प्रदर्श्यन्ताम् । (पृ० ६९ पं० १३।पं० १५।पं० १६।पं० १८) १५

(६) अयुतसिद्धयोः किं लक्षणम् । (पृ० ७२ पं० १७) १०

(७) प्रागभाव-प्रध्वंसाभावा-त्यन्ताभावा-न्योन्याभावानां लक्षणानि प्रदर्श्यन्ताम् । (पृ० ७३ पं० २४।पृ० ७४ पं० १५।पृ० ७५ पं० २।पं० १७) १५

१९३२

(१) द्रव्यस्य किं लक्षणम् ? अन्धकारस्य तल्लक्षणाक्रान्तत्वं वर्तते न वा ? वर्तते चेत्, कथं नवैव द्रव्याणि, न वर्तते चेत्, कुत्रान्तर्भावः ? इति स्पष्टं वाच्यम्। (पृ० ३ पं० ३, वा(१) (२) २०

(२) स्पर्शस्य लक्षणं सपदकृत्यमुक्त्वा तत्कतिविधम्, कुत्र च कीदृशम्, कानि च स्पर्शवन्ति द्रव्याणीति स्पष्टं लिखत। (पृ० १९ पं० २६। पं० २९ पं० २२। पं० २३। पं २३) १५

(३) प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः कतिविधः, कानि च तेषामुदाहरणानि। (पृ० ३२ पं० ८। पं० २१, पं० २५ पृ० ३३ पं० ५, ६, १३, २२, ३०) १५

(४) व्यतिरेकिणो लक्षणं प्रतिपाद्यताम्। (पृ० ४३ पं० ५) १०

(५) साधारणा-साधारणा-नुपसंहारिणां सोदाहरणानि लक्षणानि प्रदर्शनीयानि। (पृ० ४७ पं० ५, १०। पृ० ४८ पं० ८, १६। पृ० ४९ पं० ५, १२) १६

(६) विशेषस्य समवायस्य च किं लक्षणम्, कानि च नित्यद्रव्याणि। (पृ० ७१ पं० १८। पृ० ७२ पं० २४। पृ० ५ पं० ५ 'इन्दु') १५

(७) सामान्यस्य किं लक्षणम्, कतिविधञ्च तत्। (पृ० ७० पं० १४। पृ० ४ पं० १७) १०

---

( १ ) पृ० ३ मध्ये गुणनिरूपणप्रसङ्गे टीकायां गुणाः नवसु द्रव्येष्वेव वर्तन्त इति निदर्शनाद्गुणवत्त्वमपि द्रव्यस्य लक्षणान्तरं बोध्यम्, एवं क्रियावत्त्वमपीति ।।

( २ ) ननु अन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैव द्रव्याणीति। न च तस्य द्रव्यत्वमेव कथं स्यादिति वाच्यम्। गुणवत्त्वरूपस्य क्रियावत्त्वरूपस्य च द्रव्यत्वसाधकस्य तत्र सत्त्वात्, 'नीलं तमश्चलती'ति प्रत्ययात्। अथ तस्य क्लृप्तनवद्रव्येष्वेवान्तर्भावेण न नवत्वव्याघात इति शङ्क्यम्, 'तमो न पृथिवी गन्धाभावात्, तमो न जलादिकन्नीलरूपवत्त्वादि'त्यनुमानाभ्यां तस्य क्लृप्तानन्तर्भूतत्वसिद्धेरिति चेन्न। तेजोभावे तदन्तर्भावात्। तथाच प्रौढप्रकाशकतेजःसामान्याभावस्तमः पदार्थः। न च कथं तत्र नीलवत्त्वादिप्रतीतिरिति वाच्यम्। रूपवत्ताप्रतीतिस्तु पार्थिवपदार्थगतौपाधिकी भ्रान्तिरेव। एवं कर्मवत्ताप्रतीतिरप्यालोकापसरणादिजन्यौपाधिकी भ्रमात्मिकैव। तथाच नवैव द्रव्याणीति सिद्धम्।

## १६३३

(१) कर्मणः किं लक्षणम् ? कतिविधञ्च तत्, के च तेषां भेदाः । (पृ० ४ पं० ७, ६) १५
(२) रूपस्य लक्षणमुक्त्वा तत्कतिविधम् ? कुत्र च कीदृशम्, कानि च रूपवन्ति द्रव्याणीति स्पष्टमभिधीयताम् । ( ० १३ पं० २३।पं० १३।पं० १४।पं १५) १५
(३) परत्वस्य अपरत्वस्य च लक्षणं प्रतिपाद्य, कार्य-कारण-करणानां लक्षणानि प्रतिपाद्यत । (पृ० १९ पं० १९।पं० २०।पृ० २७ पं० २९।पं० १९।पृ० २६ पं० २६) १५
(४) अन्वय-व्यतिरेकिणो लक्षणं सोदाहरणं प्रतिपाद्यताम् । (पृ० ४२ पं० १४, ११। पृ० ४३ पं० ५, पृ० ४२ पं० २८) १५
(५) विरुद्ध-सत्प्रतिपक्ष-स्वरूपासिद्ध-बाधितानां सोदाहरणानि लक्षणानि प्रदर्शनीयानि । (पृ० ४९ पं० २५, पृ० ५० पं० ७।पृ० ५१ पं० ३, पृ० ५३ पं० ५, १०।पृ० ५६ पं० ७, ११ ) १५
(६) वाक्यार्थज्ञाने हेतवः के, तेषां स्वरूपञ्च किम् ? (पृ० ६० पं० ११।पं० १२) १५
(७) ध्वंस-प्रागभावयोः कि लक्षणम् । (पृ० ७४ पं० १५।पृ० ७३ पं० २४) १०

---

## १६३४

(१) पृथिव्यादीनां नवानां द्रव्याणां प्रत्येकं लक्षणं मूलकृताऽभिहितं प्रदर्शनीयम् । (पृ० ५ पं० २७।पृ० ७ पं० १६।पृ० ८ पं० १६।पृ० ९ पं० १३।पृ० १० पं० १४। पृ० ११ पं० ५।पं० १६।पं० २६।पृ० १२ पं० १९) २०
(२) अयथार्थानुभवो यथार्थानुभवश्च कतिविधः ? के च तयोर्लक्षणे । (पृ० ६३ पं० ८। पृ० २५ पं० २८।पृ० २५ पं० ८,वा पं० १९।पृ० २३ पं० २८,वा पृ०२४ पं० २३) २०
(३) प्रसारणा-कुञ्चनाख्ययोः कर्मणोर्लक्षणेऽभिधीयेताम् । (पृ० ६९ पं० १८।पं १६) १०
(४) जातिः कतिविधाः ? सा कुत्र वर्तते ? किञ्च तस्या लक्षणम् ? । (पृ० ४ पं० १७। पृ० ७० पं० ९ । पं० १४) १०
(५) विशेषपदार्थः कुत्र वर्तते ? तस्य लक्षणमभिधाय विशदीक्रियताम् । (पृ० ७१ पं० १८।पं० १९) १०
(६) येषां पदार्थानां समवायसम्बन्धः सम्भवति, ते पदार्था निर्दिश्यन्ताम् । (पृ० ७२ पं० १७, १८) १०
(७) अन्योन्याभावा-त्यन्ताभावयोः सोदाहरणे लक्षणे निरूपणीये । (पृ०७५पं० १७, १९।पृ० ७५ पं० २, पृ० ७४ पं० २८) २०

---

१९३५

(१) पदार्थाः कति ? कति च पदार्थानामवान्तरभेदाः। (अस्योत्तरं (ख) परिशिष्टे सर्वं मिलिष्यति।) १९

(२) समवायिकारणा-समवायिकारण-निमित्तकारणानां लक्षणानि प्रदर्शनीयानि। घटस्य, घटरूपस्य च किं समवायिकारणम् ? के चासमवायिकारणनिमित्तकारणे। (पृ० २८ पं० २४।पृ० २९ पं० १०। पं० १२। घटं प्रति कपालः समवायिकारणम्। घटरूपं प्रति घटः समवायिकारणम्। कपालद्वयसंयोगो घटं प्रत्यसमवायिकारणम्। घटरूपं प्रति कपालरूपमसमवायिकारणम्। दण्डो हि घटं प्रति निमित्तकारणम्। घटरूपं प्रति तेज.संयोगो निमित्तकारणम्।) १८

(३) परत्व, अपरत्व, द्रवत्व, शब्द, संस्काराणां कानि लक्षणानि ?। (पृ० १९ पं० १९ २०।पृ० २१ पं० ४।पृ० २२ पं० ९। संस्कारत्वजातिमत्त्वं संस्कारस्य लक्षणम्।) १०

(४) सव्यभिचार-सत्प्रतिपक्ष-बाधितानां लक्षणानि सोदाहरणं लेख्यानि। परन्तु सव्यभिचारस्योदाहरणं मनसाऽपि परिकल्पनीयम्। (पृ० ४६ पं २४ पृ० ४७ पं० ९, पृ० ४६ पं० २१। पृ० ५१ पं० ३, पृ० ५० पं० १९।पृ० ५६ पं० ७, २। पृ० ४७ पं० १०। पृ० ४८ पं० १६।पृ० ४९ पं० १२) १९

(५) जातेः किं लक्षणम् ? त्रिषु द्रव्यगुणकर्मसु का जातिर्वर्तते ? का वा द्रव्यसामान्ये वर्तते। (पृ० ७० पं० १४।पृ० ४ पं १०) नवद्रव्यमात्रवृत्तिर्हि जातिर्द्रव्यत्वमेव) १०

(६) पृथिवीगन्धयोः, घटघटत्वयोः, परमाणुविशेषपदार्थयोश्च कः सम्बन्धः ? स सम्बन्धोऽन्यत्र वर्तते न वा, वर्तते चेत्कुत्र। १८
(समवायाख्यः सम्बन्धः। स चान्यत्रापि वर्तते। क्रियाक्रियावतोः अवयवावयविनोः वर्तते।

(७) ध्वंसप्रागभावयोः सोदाहरणे लक्षणे निरूपणीये। (पृ० ७४ पं० १९, १६।पृ० ७३ पं० २४, पृ० ७४ पं० २) ११

---

१९३६

(१) कारणं कतिविधमिति निर्दिश्य प्रत्येकस्य लक्षणं सोदाहरणं ब्रूहि। (पृ० २८ पं० ९।पं० २४, वा १६, १६,।पृ० २९ पं० ३, वा पं० १०, पं० ४, पं० २२, १९) १३

(२) रूपस्य किं लक्षणम् ? के च भेदाः ? कस्मिन् द्रव्ये कीदृशं रूपं वर्तते। (पृ० १३ पं० २३। पं० १३। पं० १४, १९) १३

(३) (क) किन्नाम स्वार्थानुमानम् ? परार्थानुमानादस्य को भेदः ? १०
(पृ० ३८ पं० २०। परार्थानुमाने प्रतिज्ञादिपञ्चावयवानां प्रयोगः क्रियते, स्वार्थानुमानस्य स्वानुमितिं प्रत्येव प्रयोजकतया तत्र प्रतिज्ञावाक्यानामप्रयोगेऽपि न कापि क्षतिरिति तत्प्रयोगाप्रयोगाभ्यामेव तयोर्भेदो ज्ञेयः।)

(ख) त्रिविधस्य लिङ्गस्य सोदाहरणं लक्षणं लेख्यम्। (पृ० ४१ पं० १२,१६, पृ० ४२ पं० १४, ११, पृ० ४३ पं० ९ पृ० ४२ पं० २८) १२

(४) वाक्यस्य किं लक्षणम्, वाक्यं कतिविधम्? वाक्यार्थज्ञाने कानि कारणानि। (पृ० ९९ पं० १९। पृ० ६२ पं० १०। पृ० ६० पं० ११, १२) १३

(५) हेत्वाभासः कः? कतिविधश्च सः? असिद्धस्य सोदाहरणान् भेदान् प्रदर्शय। (पृ० ४९ पं० १४। पं० ९। पृ० १२ पं० ४, १३, पृ० ९३ पं० ३, २०, २३) १३

(६) गुणानां कियन्तो भेदाः? के च ते? जीवात्मनि के गुणा वर्तन्ते। (पृ० ३ पं० ११। पं० ८। पं० २३) १३

(७) शब्दस्य अभावस्य च सात्क्षात्कारे कः सन्निकर्षः? तादृशसाक्षात्कारः कया प्रक्रियया सम्भवति। (पृ० ३३ पं० १३, प्रथममात्ममनोयोगस्ततो मनसश्श्रोत्रेण सह योगस्ततः कर्णविवरवर्त्याकाशरूपं श्रोत्रं हि समवायेन शब्देन सह सम्बध्यते शब्दस्य गुणत्वाच्छ्रोत्रस्य गुणीभूतत्वाद् गुणगुणिनोश्च समवायात्ततः प्रत्यक्षं शब्दस्येत्येयं शब्दप्रत्यक्षप्रक्रिया। पं० २९, आत्मसंयुक्तं मनश्चक्षुषा संयुनक्ति, चक्षुर्हि संयोगसम्बन्धेन भूतले सम्बध्यते, तत्र विशेषणतासम्बन्धेन घटाभावो वर्तते 'घटवद्भूतलमि'ति ज्ञाने घटाभावस्य प्रकारत्वात्तथाच स्वसंयुक्तविशेषणतासम्बन्धेन घटाभावस्य प्रत्यक्षं तत्प्रक्रिया चेयं बोध्या।) १३

---

## १९३७

(१) स्पर्शस्य किं लक्षणम्? के च तद् भेदाः? कस्मिन्द्रव्ये कीदृशः स्पर्शो वर्तते। (पृ० १९ पं० २६। पं० २२। पं० २३) १०

(२) अनुभवस्य लक्षणमुक्त्वा अयथार्थानुभवः कीदृशः? कतिविधश्चेति प्रदर्श्य, संशयस्य सोदाहरणं लक्षणं लेख्यम्। (पृ० २३ पं० १८। पृ० २९ पं० ८, वा पं० १९। पृ० ६३ पं०। पं० २६, २२) २०

(३) संस्कारस्य कियन्तो भेदा? के च ते? आत्मनि (जीवे) कः संस्कारः, मनसि च कः? कस्मिन् द्रव्ये संस्कारो न भवति। (पृ० ६७ पं० २१, पं० २८, पृ० ६८ पं० ३, पृ० ६७ पं० २३। भावनाख्यसंस्कार आत्म (जीव) वृत्तिः, मनसि च वेगाख्यः संस्कारो वर्तते। आकाश-काल दिगासु संस्कारो न वर्तत इति।) १६

(४) (क) सव्यभिचारस्य किं लक्षणम्? कियन्तो भेदाः? के च ते? प्रत्यकमुदाहरणं देयम्। (पृ० ४६ पं० २४। पं० २७, ३०, पृ० ४८ पं० ३, पृ० ४९ पं० ३) १४

(ख) "वह्निरनुष्णः द्रव्यत्वात्" इत्यत्र कः हेत्वाभासः? किञ्च तस्य लक्षणम्। (अत्र बाधाख्यो दोषः, तल्लक्षणन्तु पृ० ९६ पं० ७) ९

(५) (क) किन्नाम पाकजं रूपम् ? कुत्र तद्वर्तते । ( पृ० १६ पं० १८ । पं० १९ ) ५

(ख) परामर्शस्य किं लक्षणम् ? तेनानुमितेः कः सम्बन्धः ? (पृ० ३६ पं० १४ । जन्यत्वसम्बन्धः) १०

(६) उपमितिस्वरूपमुपवर्ण्य तदुत्पत्तिः कया प्रक्रितया भवतीति निरूप्यताम् । ( पृ० ५७ प० २३ । पं० १२ ) २०

---

## १९३८

(१) कर्मणः कि लक्षणम् ? कर्मणः कियन्तो भेदा ? के च ते, कानि च तेषां लक्षणानि, केषु द्रव्येषु कर्म वर्तते । ( पृ० ४ पं० ७।६ पृ० ६९ पं० १३, पं० १५, पं० १६, पं० १८, पं० २० । पृ० १० पं० १९, २० ) १५

(२) रूपस्य कि लक्षणम् ? रूपं कतिविधम् ? के च भेदाः, कस्मिन् द्रव्ये कीदृशं रूपं वर्तते । कस्मिन् द्रव्ये रूपं न वर्तते। पृथिव्यां रूपं नित्यमनित्यं वा। (पृ० १३ पं० २३ पं० १४ पं० १३ पं० १४, १५ । वाय्वाकाशकालदिगात्ममनांसि रूपरहितानि द्रव्याणि । पृ० १६ पं० १९ ) १५

(३) (क) प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः कतिविधः ? के च ते भेदाः ? कानि च तेषामुदाहरणानि । (पृ० ३२ पं० ८ पं० २१,२५, पृ० ३३ पं० ५,६,१३,२२,३०) १०

(ख) एवं 'प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः' इत्यस्याः पंक्तेराशयो हिन्दीभाषया वक्तव्यः । (पृ० ३२ पं० १६ 'इन्दुमती०' ) १०

(४) असिद्धभेदाः सोदाहरणाः प्रदर्शनीयाः । उपाधेः कि लक्षणम् । साध्यव्यापकत्वं किम् ? साधनाव्यापकत्वं किम् । (पृ० ५२ पं० ४, १३, पृ० ५३ पं० ३, पं० २३ पं० २० पं० २१ पं० २२) १५

(५) (क) अनुपसंहारिणः कि लक्षणम् । तस्य किमुदाहरणम् । (पृ० ४९ पं० ५ पं १२)५

(ख) शब्दो नित्यः कृतकत्वादित्यत्र को हेत्वाभासः ? तस्य कि लक्षणम् ? हिन्दी भाषया लक्षणसमन्वयः कार्यः । ( असाधारणव्यभिचारी । पृ० ४९ पं० ८ पं० १९ 'इन्दु०') १८

(६) शब्द-वाक्य-पदानां कानि लक्षणानि, आप्तस्य किं लक्षणम् । वाक्यं कतिविधम् । के च ते।भेदाः । (पृ० ५९ पं० ९ पं० १५ पं ११ पं० १० पृ० ६२ पं०१०) १०

(ख) आत्मविशेषगुणाः कति । के च ते । तत्र के नित्या अनित्याश्च । नित्या कुत्र वर्तन्ते । अनित्याः कुत्र वर्तन्ते । (पृ० ६७ पं० ५) १०

---

॥ श्रीः ॥

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० पं० |
|---|---|---|
| श्रुणु | शृणु | १–२२ |
| ,, | ,, | ६–२६ |
| अपूशाद्वस्य | अपशब्दस्य | ७–२० |
| वोध्यम् | वोध्यम् | ९–२८ |
| वायुदिषु | वायुषु | १६–२६ |
| शेषं ।: | शेषः । | ,, ,, |
| जसे | जैसे | २९–१६ |
| यत्त्विति । | पञ्चावयववाक्यमित्यनेनान्वयः, तत्=पञ्चावयववाक्यमित्यर्थः । पञ्चावयववाक्यस्य परार्थानुमानप्रयोजकत्वे तस्य तत्त्वकथनमौपचारिकमिति ज्ञेयम् । ( इत्यधिकः पाठः ) | ३९–१७ |
| यत्तु=कश्चित्पुरुषः, स्वयम् । | स्वयम्, कश्चित्पुरुष इति शेषः, | ३९–१९ |
| मजानानोपि | मजानानोऽपि | ३९–२६ |
| महाह्वदः | महाह्रदः | ४४–२२ |
| ह्वदे | ह्रदे | ४७–३ |
| आकाङ्क्षादिरंहितं | आकाङ्क्षादिरहितं | ६०–१४ |
| राजापदस्य | राजपदस्य | ६०–२२ |
| (शाद्वबोध) | (शाब्दबोध) | ६१–१९ |
| [ जसे | [ जसे | ६८–२८ |
| क्रियावन्तः= | क्रियावान्= | ७३–८ |
| ययारिति । | ययोरिति । | ,,–४ |
| दपराश्रितमेव | दपराश्रित एव | ,,–९ |

सीसकाक्षराणां घृष्टत्वान्मदीयदृष्टिदोषाच्च या अशुद्धयो विलग्नास्तासां यथामति अत्र उद्धारः कृतोऽस्ति, अन्याश्चेद् विद्वद्भिरेव परिशोधनीया इति प्रार्थये ।

---

Printed at the Vidya Vilas Press, Benares.

कमला-इन्दुमतिव्याख्योपेत-तर्कसङ्ग्रहपरिशिष्टे—

# दीपिका ।

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥

*१—चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते—निधायेति ।

ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, मङ्गले कृतेऽपि किरणावल्यादौ समाप्त्यदर्शनात्, मङ्गलाभावेऽपि कादम्बर्यादौ समाप्तिदर्शनाच्च—अन्वयव्यतिरेकव्यभिचारादिति चेन्न, किरणावल्यादौ विघ्नबाहुल्यात्समाप्त्यभावः, कादम्बर्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः ।

ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति चेन्न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्, तथाहि मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत । भोजनादौ व्यभिचारवारणायालौकिकेति, रात्रिश्राद्धादौ व्यभिचारवारणायाविगीतेति, शिष्टपदं स्पष्टार्थम् । " न कुर्यान्निष्फलं कर्म " इति जलताडनादेरपि निषिद्धत्वादिति ।

**तर्कसंग्रह** इति । तर्क्यन्ते प्रतिपाद्यन्त इति तर्का द्रव्यादिसप्तपदार्थाः, तेषां संग्रहः—संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः । कस्मै प्रयोजनायेत्यत आह—**सुखबोधायेति** । सुखेनानायासेन बोधः पदार्थज्ञानं तस्मै इत्यर्थः ।

ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोऽयं ग्रन्थः क्रियत इत्यत आह—**बालानामिति** । तेषामतिविस्तृतत्वात् बालानां बोधो न भवतीत्यर्थः । ग्रहणधारणपटुर्बालः न तु स्तनन्धयः ।

किं कृत्वा क्रियत इत्यत आह—**निधायेति** । विश्वेशं जगन्नियन्तारं शिवं हृदि

---

* दीपिकायामनेन सर्वत्र निर्दिष्टाङ्काः पृष्ठाङ्का इत्यवसाय तत्र तत्र मूलाऽवतरणं द्रष्टव्यम् ।

